# भूमिका ।

अङ्गीकरोति यः काव्यं शब्दार्थावनलङ्कृतौ ।
असौ न मन्यते कस्मादनुष्णमनलं कृती ॥

इत्यभियुक्तोक्त्या सालङ्कारयोरेव शब्दार्थयोः काव्यत्वे काव्य-ज्ञानाय काव्य-करणाय चालङ्कारज्ञानं परमावश्यकम् । एतदर्थमेव श्रीमता वाग्भटेन कविवरेण पञ्चपरिच्छेदात्मकोऽयं वाग्भटालङ्काराख्यः प्राञ्जलविशदरचनः सचेतसामाह्लादजनको ग्रन्थः प्रणायि । अत्र ग्रन्थकृता न केवलं शब्दार्थालङ्कारा एव लक्षिता उदाहृताश्च, अपि तु कवित्वप्राप्तिरुपाया. काव्य-कारणानि काव्य-गुणदोषाश्च यथायथं सर्वमपि काव्यज्ञानौपयिकं संक्षिप्य लक्षितम्, पञ्चमे काव्यात्मा रसोऽपि संक्षिप्य लक्षितो व्याकृतश्च । तदिदमल्पशरीरमपि सर्वार्थप्रकाशि ग्रन्थरत्नं प्रणयता वाग्भटेन वाक्सर्वं कलशे सागरनिक्षेप कृत ।

अस्य ग्रन्थस्य कर्ता श्रीवाग्भटः कविर्जैनधर्मानुग आसीदिति मङ्गलाचरणपद्यत एव प्रतीयते । यद्यप्येतद्ग्रन्थस्य वैष्णवेष्वपि प्रचारसिद्ध्यै प्राचीनेन केनचिद् टीकाकर्त्रा, सिंहदेवगणिनाम्ना सूरिणा, मङ्गलाचरणपद्यं विष्णुनमस्कारपरतयापि व्याख्यातम्, परस्परप्रीतिहेतुतया स्तुत्यमायं तस्य प्रयत्नस्तथापि तत्रस्थं 'श्रीनाभेयजिन' पदं मुख्यया वृत्त्या भगवन्तं जिनमेव स्मारयतीति ग्रन्थकर्तुर्जैनधर्मानुगामित्व एव पक्षपातः । श्रीसिंहदेवगणिरपि स्वयं धर्मेण जैन एवासीत् । तेनापि स्वटीकारम्भे श्रीजिन एव गुणगणैर्गीतः ।

अयं वाग्भटो 'वाहड' इति प्राकृतनाम्नापि प्रसिद्ध । अस्य पितुर्नाम 'सोम' इत्यासीत् । ~

बम्भण्डसुत्तिसंपुडमुत्तिअमणिणो पहासमूह व्व ।
सिरिवाहडत्ति तणओ आसि बुहो तस्स सोमस्स ॥ [वाग्भट ४।१४८]

इति संकरालङ्कारोदाहरणस्य जिनवर्मसूरिकृतायां व्याख्यायाम् 'एतद्ग्रन्थकारेण स्वनामधादेवं संकरालङ्कारस्योदाहरणं भणितम्' इत्युक्तम् । तेन विज्ञायते, अयं वाग्भट श्रीसोमस्य पुत्र आसीत्, 'वाहड' इति चास्य प्राकृतं नाम ।

अयं वाग्भटो महाकविः अणहिल्लपाटलपुरशासकस्य श्रीकर्णदेवनृपसूनोः जयसिंहनृपतेर्महामात्य आसीत्। कर्णदेवनृपसूनुरणहिल्लपाटलपुरं शशासेति—

अणहिल्लपाटलपुरमवनिपतिः कर्णदेवनृपसूनुः ।
श्रीकलशनामधेयः करी च जगतीह रत्नानि ॥ [वाग्भट ४।१३२]

इति ग्रन्थकर्तुः समुच्चयालङ्कारोदाहरणात् प्रतीयते । 'कर्णदेवनृपसूनुः श्रीजयसिंहदेवः' इति तट्टीकाकारः श्रीसिंहदेवगणिराह ।

किं च—'बम्भण्ड' इत्यादिपूर्वोक्तपद्यावतरणिकायां सिंहदेवगणिरेवाह—'इदानीं ग्रन्थकार इदमलङ्कारकर्तृत्वख्यापनाय वाग्भटाभिधस्य महाकवेर्महामात्यस्य तन्नामगाथयैकया निर्दिशति' एतेनास्य महाकवित्वमिव महामात्यत्वमपि ज्ञायते । श्रीजयसिंहनृपतेरेव प्रशासनात्तस्यैवायं महामात्योऽभवदिति सम्भाव्यते । अणहिल्लपुरमेवास्य जन्मभूमिरन्यन्न वेति न विशिष्य निर्णीयते ।

### वाग्भटस्य कालः ।

अणहिल्लपुरं प्राप क्ष्मापः प्राप्तजयोदयः ।
महोत्सवप्रवेशाय गजारूढसुरेन्द्रवत् ॥
वाग्भटस्य विहारं स ददर्श दृगरसायनम् ।
अन्येद्युर्वाग्भटामात्यः धर्मोत्यन्तिकवासनः ॥
अपृच्छदार्हताचारोपदेष्टारं गुरुं नृपः ।
श्रीमद् वाग्भटदेवोऽपि जीर्णोद्धारमकारयत् ॥
शिखीन्दुरविवर्षे[1] च ध्वजारोपं व्यधापयत् ॥

इति प्रभाचन्द्रमुनिविरचितप्राभाविकचरितात्तो वाग्भटस्य सत्ता १२१३ विक्रमसंवत्सरे, तदनुसारेण ११५७ खिस्टेब्दे प्रतीयते । जयसिंहनृपतेरपि १०९३–११४३ खिस्ताब्देष्वभवदिति हेमाचार्यप्रणीत–'द्याश्रयकाव्यात्' अवगम्यते ।

चत्वारो वाग्भटा अभवन् । वाग्भटालङ्कारप्रणेता वाग्भट एकः । काव्यानुशासनप्रणेता वाग्भटो द्वितीयः । अष्टाङ्गहृदयसंहिताप्रणेता सिंहगुप्तसूनुर्वाग्भटस्तृतीयः । नेमिनिर्वाणकर्ता वाग्भटश्चतुर्थः ।

---

१ शिखीन्दुरविवर्षे १२१३ वर्षे इत्यर्थः ।

## वाग्भटालङ्कारस्य प्राचीनाष्टीकास्तत्कर्तारश्च।

१ जिनवर्धनसूरिविरचिता प्रथमा।

२ सिंहदेवगणिप्रणीता द्वितीया।

३ क्षेमहंसगणिसमुल्लासिता तृतीया।

४ अनन्तभट्टसुतगणेशविनिर्मिता चतुर्थी।

५ राजहंसोपाध्यायग्रथिता पञ्चमी।

तदयं ग्रन्थः सुकुमारमतीनामलङ्कारशास्त्रे प्रवेष्टुकामानां छात्राणां परमोपयोगीत्याकलय्य पञ्चनदविश्वविद्यालयप्राच्यभाषाशिक्षासमितिसदस्यैः प्राज्ञपरीक्षायां पाठ्यत्वेन विनिवेशितः, अस्माभिश्चायं **श्रीमेहरचन्द्रलक्ष्मणदाससंस्कृतपुस्तकालयाध्यक्ष**प्रार्थनयाऽन्वर्थनाम्न्या सुतरभार-स्युभयविलसितया बालबोधिन्या टीकया सनाथीकृत्य सम्पाद्य च सान्तेवासिनां विपश्चिदपश्चिमानां पुर उपह्रियते। आशास्यतेऽनेनाध्ययनाध्यापनयोरवश्यं कश्चनोपकरिष्यत इत्यलं पल्लवितेन।

सम्पादकः

**उदयवीरः**

# वाग्भटालङ्कारस्थविषयानुक्रमणिका ।

| विषय | पृष्ठाङ्का |
|---|---|
| **प्रथमपरिच्छेदे—** | |
| मङ्गलाचरणम् | १ |
| काव्यफलम् | २ |
| काव्योत्पत्तौ कारणम् | २ |
| प्रतिभा | ३ |
| व्युत्पत्ति | ४ |
| अभ्यास | ४ |
| अभ्यासप्रकार | ५ |
| बन्धचारुत्वहेतव | ६ |
| अन्यथाबन्धस्याचारुत्वोदाहरणम् | ६ |
| यावत्सरकविरवमभ्यासकथनम् | ७ |
| तदुदाहरणम् | ८ |
| अन्यार्थानपहरणकथनम् | ८ |
| समस्यायामन्यार्थापहरणकथनम् | ९ |
| अर्थस्फूर्तिहेतव | १० |
| अर्थप्रकाशनप्रकार | १० |
| कविकर्तव्योपदेश | ११ |
| उपदेशान्तरम् | ११ |
| अन्यविधोपदेश | १२ |
| अपरविधोपदेश | १३ |
| बवयोर्डलयोरभेदोपदेश | १३ |
| तेषामुदाहरणानि | १४–१६ |
| हारबन्धचित्रम् | १७ |
| छत्रबन्धचित्रम् | १८ |
| छत्रबन्धचित्रान्तरम् | १९ |
| काव्यनिर्माणकालनिर्णय | २० |
| **द्वितीयपरिच्छेदे—** | |
| काव्यशरीरकथनम् | २१ |
| भाषानिरूपणम् | २१ |
| वाङ्मयस्य द्वैविध्यनिरूपणम् | २२ |
| निर्दोषकाव्यप्रशंसा | २३ |
| पदगतदोषा | २३ |
| सोदाहरणमनर्थकलक्षणम् | २४ |
| सोदाहरणं श्रुतिकटुलक्षणम् | २५ |
| सोदाहरणं व्याहतार्थलक्षणम् | २५ |
| सोदाहरणमलक्षणलक्षणम् | २६ |
| सोदाहरणं स्वसङ्केतप्रक्लृप्तार्थलक्षणम् | २६ |
| सोदाहरणमप्रसिद्धलक्षणम् | २७ |
| सोदाहरणमसम्मतलक्षणम् | २८ |
| सोदाहरणं ग्राम्यलक्षणम् | २९ |
| वाक्यमात्रदोषोक्तिप्रतिज्ञा | २९ |
| वाक्यदोषा | ३० |
| सोदाहरणं खण्डितलक्षणम् | ३० |
| सोदाहरणं व्यस्तसम्बन्धलक्षणम् | ३१ |
| सोदाहरणमसम्मितलक्षणम् | ३१ |
| सोदाहरणमपक्रमलक्षणम् | ३२ |
| सोदाहरणं छन्दोभ्रष्टलक्षणम् | ३२ |

श्रीः

# वाग्भटालङ्कारः

## प्रथमः परिच्छेदः ।

इह 'मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते, वीरपुरुषकाणि च भवन्ती' ति वचनात् शास्त्रादावभीष्टदेवतानमस्कारात्मकं मङ्गलं नः श्रेयसे श्रीवाग्भटो महाकविर्निबध्नाति—

श्रियं दिशतु वो देवः श्रीनाभेयजिनः सदा ।
मोक्षमार्गं सतां ब्रूते यदागमपदावली ॥१॥

अन्वयः—यदागमपदावली सतां मोक्षमार्गं ब्रूते, (सः) श्रीनाभेयजिनो देवः सदा वः श्रियं दिशतु ।

पदार्थः—यदागमपदावली-यस्य भगवतो देवस्य, आगमरूपाण्येव पदानि आगमपदानि सिद्धान्तभूतान्युपदेशवाक्यानीत्यर्थः, तेषामावली पंक्तिः समूहः निजसिद्धान्तोपदेशवाक्यसमूह इति यावत् । सतां-सज्जनानां विदुषाम्, मोक्षमार्गं-मोक्षस्य निर्वाणस्य मार्गं पद्धतिं तत्प्राप्तिप्रकारं वा, ब्रूते-प्रतिपादयति । 'यत्तदोर्नित्यसम्बन्धः' इति नियमात् यदिति श्रुतेः स इत्यध्याहार्यः । सः श्रीनाभेयजिनः-नाभेरपत्यं जातो वा नाभेयः 'इतश्चानिञः' इति तादितो ढक्, जयति संसारं कामादीन् वा शत्रूनिति जिनः, जयतेरुणादिको नक् [उणा० ३।२], श्रिया शोभया अणिमादिसम्पदा वा युक्तो नाभेयः श्रीनाभेयः, मयूरव्यंसकादित्वान्मध्यमपदलोपी समासः, स चासौ जिन इति कर्मधारयः, सकलसामर्थ्यवान् नाभिदेशोत्पन्नोऽर्हन्नित्यर्थः । देवः-दीव्यति दीप्यते ददाति वेति देवः, सकललोकानामुत्पत्त्यादिक्रीडाकारी, प्रकाशस्वरूपः स्वभासा वा जगत्प्रकाशकः, सर्वजीवानां स्वकृतकर्मफलोपभोगार्थं विविधसाधनानां प्रदा-

**अन्वयः—तस्य [ तत्र. पाठा० ] प्रतिभा कारणम्, व्युत्पत्तिस्तु विभूषणम्, अभ्यासो भृशोत्पत्तिकृत्, इति आद्यकविसङ्कथा [ भवति ] ।**

पदार्थः—तस्य-निरुक्तलक्षणस्य काव्यस्य, तत्रेति पाठे काव्यरचनायामित्यर्थो बोध्यः, प्रतिभा-नवनवोन्मेषशालिनी देशकालानुरूपं विशेषस्फूर्तिमती असाधारणचमत्कारयुक्ता बुद्धिः, कारणं हेतुर्भवति । व्युत्पत्तिस्तु विविधशास्त्रपर्यालोचनेन जनितः संस्कारविशेषः बहुश्रुतता नैपुण्यं विद्वत्ता, विभूषणं-विशेषशोभासमुत्पादकं भवतीत्यर्थः । प्रतिभाजन्यं काव्यं विद्वत्तयैव शोभां लभते, सत्यामपि प्रतिभायां वैदुष्यमन्तरा सौन्दर्यं नापद्यत इति भाव. । अभ्यासः—पौनःपुन्येन काव्यनिर्माणम्, भृशोत्पत्तिकृत्—भृशं झटित्येव उत्पत्तिं रचनां करोतीति तथा अविलम्बेन काव्यरचनासम्पादक इत्यर्थः । एवं च प्रतिभा काव्यनिर्माणे, व्युत्पत्तिस्तस्य सौन्दर्ये, अभ्यासश्चाविलम्बितत्वे हेतुरिति फलितार्थः । इति—उक्तरूपा, आद्यकविसङ्कथा—आद्यानां प्राग्भाविनां कवीनां ऐकमत्येनोपदेश इत्यर्थः ।

भावार्थ—उस काव्य की रचना का कारण कवि की प्रतिभाशालिनी बुद्धि होती है, व्युत्पत्ति के द्वारा रचना विभूषित की जाती है और बारबार का अभ्यास, शीघ्र काव्यनिर्माण शक्ति का उत्पादक होता है, यह प्राचीन कवियों का उपदेश है ॥३॥

**प्रतिभास्वरूपमाह—**

**प्रसन्नपदनव्यार्थयुक्त्युद्बोधविधायिनी ।**
**स्फुरन्ती सत्कवेर्बुद्धिः प्रतिभा सर्वतोमुखी ॥४॥**

**अन्वयः—सत्कवेः प्रसन्नपदनव्यार्थयुक्त्युद्बोधविधायिनी स्फुरन्ती सर्वतोमुखी बुद्धिः प्रतिभा [ इत्युच्यते ] ।**

पदार्थः—सत्कवेः—श्रेष्ठकवेः अनवद्यकाव्यनिर्मातुः, प्रसन्नेति—प्रसन्नानि प्रसादादिगुणयुक्तानि सुललितानि यानि पदानि शब्दाः, नव्या नवीनाः पूर्वमनुद्भाविता येऽर्थास्तेषां युक्तियोजनमुपयोगः, प्रसन्नपदानि च नव्यार्थयुक्तयश्चेति प्रसन्नपदनव्यार्थयुक्तयः, अभिनवार्थवर्णनपराः शब्दसमूहा इत्यर्थः । अथवा प्रसन्नपदानां या नव्यार्थयुक्तयस्ताः प्रसन्नपदनव्यार्थयुक्तयः,

रुचिरपदानां नवीनत्वार्थवस्तुभिः सह योजनेत्यर्थः । तासां य उद्बोध उल्लासः तं विधातुं शीलमस्या इति तथा सुललितपदैर्या स्वभावेनैवाभिनवार्थवर्णने प्रवर्तते सा बुद्धिरिति भावः, स्फुरन्ती-चमत्कारयुक्ता, सर्वतोमुखी-सर्वतः समन्तात् मुखं प्रसरणं यस्याः सा चतुरस्रं प्रसरणशीला सर्वाङ्गीणेत्यर्थः । बुद्धिः-प्रज्ञा, प्रतिभा उच्यत इति शेषः ।

भावार्थ—श्रेष्ठ कवि की बुद्धि को, जो सुन्दर पदों के द्वारा नवीन अर्थों के वर्णन करने में समर्थ तथा चमत्कार युक्त अर्थात् अपनी नई सूझ से भरी हुई और प्रत्येक विषय में प्रवृत्ति रखने वाली हो, प्रतिभा कहते हैं ॥४॥

व्युत्पत्तिपदार्थमाह—

शब्दधर्मार्थकामादिशास्त्रेष्वाम्नायपूर्विका ।
प्रतिपत्तिरसामान्या व्युत्पत्तिरभिधीयते ॥५॥

अन्वयः—शब्दधर्मार्थकामादिशास्त्रेषु आम्नायपूर्विका असामान्या प्रतिपत्तिः व्युत्पत्तिरभिधीयते ।

पदार्थ—शब्देति-शब्दश्च धर्मश्च अर्थश्च कामश्च ते आदौ येषां ते शब्दधर्मार्थकामादयः, तेषां यानि शास्त्राणि तेषु । द्वन्द्वान्ते श्रूयमाणस्य प्रत्येकमभिसम्बन्धनियमात् शब्दादीनां प्रत्येकं शास्त्रपदेनान्वयेति । एवं च शब्दशास्त्राणि-व्याकरणादीनि, धर्मशास्त्राणि-मन्वादीनि, अर्थशास्त्राणि-कौटलीयादीनि, कामशास्त्राणि-कामसूत्रादीनि वात्स्यायनादिप्रणीतानि, तेषु, अत्रादिशब्देन छन्दोऽलङ्कारगजाश्वरत्नपरीक्षादिशास्त्राणां संग्रहो बोध्यः । आम्नायपूर्विका-आम्नायो गुरुपरम्परया प्राप्त उपदेशः, स पूर्वं कारणं यस्याः यस्यां वेति तथा, गुरुपारम्पर्यमूलेत्यर्थः । असामान्या-असाधारणी, प्रतिपत्तिः-बोधो ज्ञानविशेषः, व्युत्पत्तिः-इति नाम्ना, अभिधीयते-उच्यते । गुरुपरम्परया प्राप्तं शब्दादिशास्त्राणामसाधारणं ज्ञानं व्युत्पत्तिशब्देनोच्यत इत्यभिप्रायः ।

भावार्थ—व्याकरण आदि सम्पूर्ण शास्त्रों के, गुरुपरम्परा से प्राप्त असाधारण ज्ञान को ही व्युत्पत्ति कहते हैं ॥५॥

अभ्यासमाह—

अनारतं गुरूपान्ते यः काव्ये रचनादरः ।
तमभ्यासं विदुस्तस्य क्रमः कोऽप्युपदिश्यते ॥६॥

**अन्वय —गुरूपान्ते काव्ये अनारतं यो रचनादर ,[बुधाः] तमभ्यासं विदु. । तस्य कोऽपि क्रमः उपदिश्यते ।**

पदार्थ —गुरूपान्ते–गुरो शिक्षकस्याचार्यस्य काव्यकुशलस्य, उपान्ते समीपे, काव्ये–काव्यविषये,अनारत निरन्तर–यो रचनादर –रचनाया श्लोकनिर्माणस्य, आदर –प्रयत्न ,बुधा इति शेष ,तम्–तादृश प्रयत्नविशेषम, अभ्यासम्–अभ्यास इति नाम्ना, विदु –जानन्तीत्यर्थ । तस्य निरुक्तस्याभ्यासस्य, कोऽपि–कश्चिदपि कियन्मात्र एव न समग्र इत्यर्थ । क्रम प्रकार , उपदिश्यते–निरूप्यते । जिज्ञासूनामनायासेन बोधार्थम् अभ्यास कर्तुं सक्षेपेण कश्चिदुपाय प्रदर्श्यत इत्यभिप्राय ।

भावार्थ—गुरु के समीप, काव्य रचना में जो विशेष प्रयत्न किया जाय, विद्वान् उसे अभ्यास कहते हैं। उसके कुछ उपायों का निर्देश [ यहा इस ग्रन्थ में ] किया जाता है। [ तात्पर्य यह है कि, किसी काव्य–कुशल गुरु की देखरेख में श्लोकनिर्माण में निरन्तर प्रयत्न करने को अभ्यास कहते हैं। उसके कुछ तरीके यह हैं ]॥६॥

**अभ्यासप्रकारमाह—**

**बिभ्रत्या बन्धचारुत्वं पदावल्यार्थशून्यया ।**
**वशीकुर्वीत काव्याय च्छन्दांसि निखिलान्यपि ॥७॥**

**अन्वय —काव्याय, बन्धचारुत्व बिभ्रत्या अर्थशून्यया पदावल्या निखिलान्यपि छन्दांसि वशीकुर्वीत ।**

पदार्थ —काव्याय–काव्य श्लोक निष्पादयितु श्लोकनिर्माणरीतिमभ्यसितुमिति यावत् । बन्धचारुत्व–बन्धस्य सन्दर्भस्य, बन्धे श्लोकनिर्माणे वा चारुत्व मनोज्ञत्व सौन्दर्यम्, बिभ्रत्या–धारयन्त्या, अर्थशून्यया–अभिधेयरहितया अत्र अपीत्यध्याहार्य , निरर्थकयापीत्यर्थ , किमुत पुनरर्थयुक्तया इति भाव । पदावल्या–पदानां सुप्तिङन्तशब्दानां आवली श्रेणि समूह इति यावत्, तया, निखिलान्यपि–यथाशक्य समस्तान्यपि छन्दांसि–वृत्तानि, वशीकुर्वीत–अवशान्यपि वशानि कुर्यात् । प्रथम हि अर्थनिरपेक्षमुललितपद विन्यासाभ्यासेन केवल वृत्तज्ञात स्वायत्त कुर्यादिति भाव ।

भावार्थ—काव्य की रचना के लिए सबसे प्रथम सुन्दर सन्दर्भ का

निर्माण करते हुए अर्थ रहित भी पद समूह के द्वारा जहां तक हो सके सम्पूर्ण छन्दों को अपने वश में करे ॥७॥

बन्धचारुत्वहेतूनुपदिशति—

पश्चाद् गुरुत्वं संयोगाद्विसर्गाणामलोपनम् ।
विसन्धिवर्जनं चेति बन्धचारुत्वहेतवः ॥८॥

अन्वयः—संयोगात् पश्चाद् गुरुत्वम्, विसर्गाणामलोपनम्, विसन्धिवर्जनं च, इति बन्धचारुत्वहेतवः [ भवन्ति ] ।

**अन्वयः—[ हे ] अधीश ! त्वया शिते कृपाणे विधृते [ सति ] घोरे [ च ] रणे कृते [ सति ] क्षितिपा भीत्या जवात् वने एव गताः ।**

पदार्थ —हे अधीश ! नृणां मनुष्याणाम्, अधीशः–निग्रहानुग्रह-कर्तृत्वेन स्वामी, तत्सम्बुद्धौ हे अधीश ! नरेन्द्र ! त्वया–कर्तृभूतेन, शिते–तीक्ष्णे, कृपाणे–असौ, विधृते–धारिते करेण गृहीते सति, घोरे–भयावहे तुमुले वा, रणे–संग्रामे च, कृते–विहिते सति, क्षितिपाः–प्रसंगात् शत्रवो राजानः, भीत्या–भयेन, जवात्–वेगात्, वने–कानने एव, गताः–प्राप्ताः । त्वत्प्रतापभिया शत्रुनृपाः संग्रामाङ्गणं राज्यं च परिहाय निजप्राणान् रक्षितुं विजनप्रदेशं प्रविष्टाः, सर्वं परित्यज्य पलायिता इति भावः ।

अत्र श्लोके 'अधीश' इति पदे श्रवणकटुः सन्धिः । 'विधृते त्वया' इत्यत्र 'त्व' इति संयुक्तवर्णस्य परत्वात् पूर्वस्य गुरुत्वं नास्ति, अपि तु 'ते' इत्यस्य स्वाभाविकमेव गुरुत्वम् । 'क्षितिपा भीत्या' इत्यत्र च विसर्गलोपो वर्तते । एवं चेमे दोषा पदशैथिल्यजनकत्वात् रचनाचारुत्वं नाशयन्तीत्यर्थः ।

भावार्थ—हे मनुष्यों के मालिक ! आपने तेज तलवार को हाथ में उठा जब घोर संग्राम प्रारम्भ किया, तो सब विरोधी राजा, आपके डर से जल्दी ही अपनी जान बचाने के लिये जंगलों में भाग गये ॥९॥

**अर्थविशेषं विनापि श्लोकरचनमभ्यसनीयमेवेत्याह—**

**अनुल्लसन्त्यां नव्यार्थयुक्तावभिनवत्वतः ।**
**अर्थसङ्कलनातत्त्वमभ्यस्येत् सङ्ख्यास्वपि ॥१०॥**

**अन्वयः—अभिनवत्वतः [ कारणात् ] नव्यार्थयुक्तौ अनुल्लसन्त्यां सङ्ख्यास्वपि अर्थसङ्कलनातत्त्वम् अभ्यसेत् ।**

पदार्थ —अभिनवत्वतः–अभिनवस्य भावस्तत्त्वं तस्मात्, पञ्चम्यर्थे तसिः, अभिनवत्वात् नवीनत्वात् कारणात्, पदबन्धेऽनुरालत्वादित्यर्थः । नवीनो हि कविः पूर्वकविभिरनुद्भावितान् निगूढानर्थान् न सहसैव कल्पयितुं शक्नोति, तस्मात् हेतोः, नव्यार्थयुक्तौ–नव्यस्य नूतनस्य, अर्थस्य–प्रतिपाद्यस्य वस्तुनः युक्तौ–कल्पनायाम्, अनुल्लसन्त्याम्–अपरिस्फुरन्त्याम्, अभिनववर्णनीयविषयकल्पनायामसमर्थतायामित्यर्थः । सङ्ख्यास्वपि लौकिकसंव्यवहारासुल्वपि,

किमुत काव्यरचनायामिति भावः। अर्थसङ्कलनातत्त्वम्–अर्थानां प्रतिपाद्यवस्तूनां सङ्कलना संयोजना तस्यास्तत्त्वं रहस्यं पदरचनारीतिलक्षणम्, अभ्यस्येत्–पुनः पुनरनुशीलयेत्। अर्थसंयोजनं सुचारुरूपेण यथा भवेत् तथा दैनिकव्यवहारेष्वप्यभ्यासं विदधीतेति भावः।

भावार्थ—नवीन कवि रचना करने में अकुशल होने के कारण, पहले पहल, पूर्व कवियों के द्वारा न की गई कल्पनाओं के करने में असमर्थ होता है। इसलिये साधारण बातचीत में भी अर्थयोजना के उपायों का अभ्यास करे॥१०॥

लौकिकालापेऽप्यर्थयोजनाभ्यासमुदाहरति—

आगम्यतां सखे! गाढमालिङ्ग्यात्र निषीद च।
सन्दिष्टं यन्निजभ्रातृजायया तन्निवेदय॥११॥

अन्वय—सखे! आगम्यताम्, गाढं च आलिङ्ग्य अत्र निषीद, यत् निजभ्रातृजायया सन्दिष्टं तन्निवेदय।

पदार्थ—स्वगृहादागतं मित्रं प्रति कस्यचिदन्यस्य मित्रस्योक्तिरियम्। हे सखे! मित्र! आगम्यताम्–आगमनं क्रियताम्, स्वागतं तव भवत्विति भावः। गाढम्–अतितरां च आलिङ्ग्य–आश्लिष्य, अत्र–अस्मिन् स्थाने, मम समीप इति भावः, निषीद–उपविश। यत् किमपि च वाचिकादिकं निजभ्रातृजायया–निजस्य स्वस्य मम यो भ्राता–परमः सुहृत् भवान्, तस्य भवतो जायया पत्न्या, सन्दिष्ट–मदुद्देशेन वाचिकं नमस्कारादिकम् अन्यद्वा प्रेषितं भवेत्, तत्–वाचिकादिकं सर्वं निवेदय–कथय प्रतिपादयेत्यर्थः।

सर्वमिदं पद्यं लौकिकमेव वाक्यम्। अभ्यासावस्थायां हि नवीनार्थस्याप्रतिभानात् उक्तरूपामेवार्थयोजनां कुर्यात्। सत्यभ्यासे पुनः स्वयमेव नव्यार्थपरिस्फुरणेन निर्दोषकाव्यरचना जायत इति भावः।

भावार्थ—हे मित्र! आओ और गाढ आलिङ्गन करके यहां हमारे समीप बैठो। हमारी भौजाई ने जो सँदेशा भेजा हो, वह कहो॥११॥

ननु यदि नव्यार्थयोजना न प्रस्फुरति, तर्हि परकाव्यार्थमादायैव कुतो नाभ्यासो विधीयते। तत्राह—

परार्थबन्धाद् यश्च स्यादभ्यासो वाच्यसङ्गतौ।
स न श्रेयान् यतोऽनेन कविर्भवति तस्करः॥१२॥

अन्वय.—वाच्यसङ्गतौ च परार्थबन्धाद् योऽभ्यासः स्यात्, स. श्रेयान् न [भवति] यतः अनेन कविः तस्करो भवति।

पदार्थ —वाच्यसङ्गतौ-वाच्यस्य प्रतिपादनीयस्यार्थस्य विषयस्य वा सङ्गतौ-सयोजनाया सघटनायामित्यर्थ । परार्थबन्धात्-परेषामन्येषा कवीना ■ अर्थबन्ध -प्रतिपाद्यवस्तुग्रथन तस्मात्, ल्यब्लोपेऽत्र पञ्चमी ज्ञेया, तेन समवलम्ब्येत्यर्थ । योऽभ्यास -काव्यनिर्माणे पुन पुन प्रयत्न, स्यात्-भवेत्, स -अभ्यास, श्रेयान्-कल्याणावहो यशस्करो न भवतीति शेष । यत -यस्मात् कारणात्, अनेन-एवभूतोऽभ्यासेन, कवि -काव्यनिर्माता, तस्कर-चौर, तद्लोके निन्द्यो भवति-जायते ।

परार्थबन्ध निज ब्रुवाण कविर्लोके निन्द्यत एव । एव च कीर्त्यर्थ काव्यविधान विपरीतफलमेव भवतीति भाव । तथा चोक्तम्—

"परस्य काव्य स्वमिति ब्रुवाणो
विज्ञायते ज्ञैरिह काव्यचौर ।
विलोक्य माणिक्यमयोग्यहस्ते
प्रत्येति को नाम यदेतदस्य ॥" इति ।

भावार्थ—वर्णनीय अर्थ की रचना में, दूसरे कवियों की कृतियों का आश्रय लेकर जो अभ्यास किया जाता है, वह श्रेयस्कर नहीं होता । क्योंकि ऐसा करने से कवि चोर के समान लोक में निन्दनीय समझा जाता है ॥१२॥

समस्यायान्तु अन्यार्थग्रहणमपि न दोषावहमित्याह—

परकाव्यग्रहोऽपि स्यात् समस्यायां गुणः कवेः ।

हि–यस्मात् कारणात्, असौ–समस्यापूर्तिकारी कविः, तदर्थानुगतं–तस्य परकाव्यस्य योऽर्थस्तस्यानुगतमनुकूलम्, नवम्–अश्रुतपूर्वम्, निजप्रतिभाप्रागल्भ्येनाभिनवमर्थम, रचयति–निबध्नाति ।

भावार्थ—समस्या पूर्ति के लिये दूसरे कवि के काव्य का ग्रहण कर लेना कवि का गुण ही होता है । क्योंकि वह दूसरे काव्य के अर्थ के अनुकूल, समस्या में नवीन अर्थ की रचना करता है ॥१३॥

अथार्थस्फूर्तेर्निमित्तान्याह—

मनःप्रसत्तिः प्रतिभा प्रातःकालोऽभियोगिता ।
अनेकशास्त्रदर्शित्वमित्यर्थालोकहेतवः ॥१४॥

अन्वयः—मनःप्रसत्तिः प्रतिभा प्रातःकालः अभियोगिता अनेकशास्त्रदर्शित्वम् इति [एते] अर्थालोकहेतवः [भवन्ति] ।

पदार्थ—मनःप्रसत्तिः–अखिलमनोव्यथाराहित्येन चेतसः प्रसन्नता, प्रतिभा–'प्रसन्नपदनव्यार्थयुक्त्युद्बोधविधायिनी । स्फुरन्ती सत्कवेर्बुद्धि' अथवा—नवनवोन्मेषशालिनी बुद्धिः, प्रातःकालः–प्रभातसमयः, इदमुपलक्षणं सर्वस्याप्यनुकूलस्य समयस्य, अभियोगिता–अभियोगः उद्यमः सोऽस्यास्तीति मत्वर्थे इन्, तस्य भावः परिश्रमशीलत्वमित्यर्थः । प्रातःकालेऽभियोगिता इत्यपि पाठः, प्रभाते काव्यरचनायां प्रवर्तनमित्यर्थः । अनेकशास्त्रदर्शित्वम्–विविधशास्त्रार्थपरिज्ञानवत्त्वम्, इत्येते पूर्वोक्ताः अर्थालोकहेतवः–अर्थानां प्रतिपाद्यवस्तूनाम् आलोकस्य प्रकाशस्य आलोके समुद्भावने वा हेतवः कारणानि भवन्तीति शेषः ।

भावार्थ—मन की प्रसन्नता, कवि की स्फुरणशील बुद्धि, प्रातःकाल या अनुकूल समय, अनेक शास्त्रों का वास्तविक ज्ञान, ये सब रचना में वर्णनीय अर्थ के प्रकाशक होते हैं ॥१४॥

अथार्थप्रकाशनविधिमाह—

समासमिव पूर्वार्धे कुर्यादर्थप्रकाशनम् ।
तत्पुरुषबहुव्रीही न मिथः प्रत्ययावहौ ॥१५॥

अन्वयः—पूर्वार्धे अर्थप्रकाशनं समासमिव कुर्यात् । तत्पुरुषबहुव्रीही मिथः प्रत्ययावहौ न [कुर्यात्] ।

पदार्थः—पूर्वार्धे—श्लोकस्य पूर्वभागे, अर्थप्रकाशनम्—अर्थस्य श्लोकादिना काव्येन प्रतिपाद्यस्य, प्रकाशनं—प्रतिपादनम्, समाप्तमिव—प्रायेण समाप्तं न तु समाप्तमेवेत्यर्थः, कुर्यात्—विदधीत। एवं च द्वितीयतृतीयपादयोः सन्धिः समासश्च न कार्य इति। किं च तत्पुरुषबहुव्रीही—तत्पुरुषश्च बहुव्रीहिश्च इत्येतन्नामकौ समासौ, मिथः—परस्परम् प्रत्ययावहौ—प्रत्ययमावहत इति अन्योऽन्यस्य सन्देहजनकावित्यर्थः। न कुर्यादिति योज्यम्। कश्चिदपि समासोऽसन्दिग्ध एव कार्य इत्यर्थः। यथा 'श्वशत्रु' इत्यत्र पदे 'श्वस्य शत्रुः' इति तत्पुरुषः, 'श्वः शत्रुर्यस्य' इति वा बहुव्रीहिः, इति सन्दिग्धं समासं क्वापि न कुर्यादिति भावः।

भावार्थ—श्लोक के पहले आधे भाग में ही अर्थ को लगभग समाप्त कर दे। तथा तत्पुरुष और बहुव्रीहि समास श्लोक में परस्पर सन्देहजनक न होने चाहिएँ ॥१५॥

काव्यनिर्माणे शिक्षान्तरमाह—

> एकस्यैवाभिधेयस्य समासं व्यासमेव च।
> अभ्यसेत् कर्तुमाधानं निःशेषालङ्क्रियास्वपि ॥१६॥

अन्वयः—निःशेषालङ्क्रियासु अपि एकस्य अभिधेयस्य एव आधानं कर्तुं समासं व्यासमेव च अभ्यसेत्।

पदार्थ—निःशेषालङ्क्रियासु—समग्रालङ्कारेषु अनुप्रासोपमादिषु अपि, एकस्य अभिधेयस्य—प्रतिपादनीयार्थस्यैव आधानं—व्यवस्थापनम् आरोपणं वा, कर्तुं—विधातुम्, समासं—समासेन संक्षेपेण, व्यासं—व्यासेन विस्तरेण चैव, अभ्यसेत्—पुनः पुनः प्रयत्नं कुर्यादित्यर्थः। सर्वेष्वप्यलङ्कारेषु एकस्यैवार्थस्य दृढां व्युत्पत्तिमापादयितुं पौनःपुन्येन प्रयतेतेति भावः।

भावार्थ—सम्पूर्ण अलंकारों में एक ही वर्णनीय वस्तु को संक्षेप अथवा विस्तार से दृढ़ता प्राप्त करने के लिए बारबार अभ्यास करे ॥१६॥

कवीनां कृते विशेषान्तरं ज्ञापयति—

> स्यादनर्द्धान्तपादान्तेऽप्यशैथिल्ये लघुर्गुरुः।
> पादादौ न च वक्तव्याश्चादयः प्रायशो बुधैः ॥१७॥

अन्वयः—अनर्द्धान्तपादान्ते, अपि अशैथिल्ये [सति] लघुः

हि–यस्मात् कारणात्, असौ–समस्यापूर्तिकारी कविः, तदर्थानुगतं–तस्य परकाव्यस्य योऽर्थस्तस्यानुगतमनुकूलम्, नवम्–अश्रुतपूर्वम्, निजप्रतिभाप्रागल्भ्येनाभिनवमर्थम्, रचयति–निबध्नाति।

भावार्थ—समस्या पूर्ति के लिये दूसरे कवि के काव्य का ग्रहण कर लेना कवि का गुण ही होता है। क्योंकि वह दूसरे काव्य के अर्थ के अनुकूल, समस्या में नवीन अर्थ की रचना करता है ॥१३॥

अथार्थस्फूर्तेर्निमित्तान्याह—

मनःप्रसत्तिः प्रतिभा प्रातःकालोऽभियोगिता।
अनेकशास्त्रदर्शित्वमित्यर्थालोकहेतवः ॥१४॥

अन्वय—मनःप्रसत्तिः प्रतिभा प्रातःकालः अभियोगिता अनेकशास्त्रदर्शित्वम् इति [पञ्च] अर्थालोकहेतवः [भवन्ति]।

पदार्थ—मनःप्रसत्तिः–अखिलमनोव्यथाराहित्येन चेतसः प्रसन्नता, प्रतिभा–'प्रसन्नपदनव्यार्थयुक्त्युद्बोधविधायिनी। स्फुरन्ती सत्कवेर्बुद्धिः' अथवा—नवनवोन्मेषशालिनी बुद्धिः, प्रातःकालः–प्रभातसमयः, इदमुपलक्षणं सर्वस्याप्यनुकूलस्य समयस्य, अभियोगिता–अभियोगः उद्यमः सोऽस्यास्तीति मत्वर्थे इन्, तस्य भावः परिश्रमशीलत्वमित्यर्थः। प्रातःकालेऽभियोगिता इत्यपि पाठः, प्रभाते काव्यरचनायां प्रवर्तनमित्यर्थः। अनेकशास्त्रदर्शित्वम्–विविधशास्त्रार्थपरिज्ञानवत्त्वम्, इत्येते पूर्वोक्ताः अर्थालोकहेतवः–अर्थानां प्रतिपाद्यवस्तूनाम् आलोकस्य प्रकाशस्य आलोके समुद्भावने वा हेतवः कारणानि भवन्तीति शेषः।

भावार्थ—मन की प्रसन्नता, कवि की स्फुरणशील बुद्धि, प्रातःकाल या अनुकूल समय, अनेक शास्त्रों का वास्तविक ज्ञान, ये सब रचना में वर्णनीय अर्थ के प्रकाशक होते हैं ॥१४॥

अथार्थप्रकाशनविधिमाह—

समासमिव पूर्वार्धे कुर्यादर्थप्रकाशनम्।
तत्पुरुषबहुव्रीही न मिथः प्रत्ययापहौ ॥१५॥

अन्वय—पूर्वार्धे अर्थप्रकाशनं समासमिव कुर्यात्। तत्पुरुषबहुव्रीही मिथः प्रत्ययापहौ न [कुर्यात्]।

भावार्थ—कवि को चाहिए कि वह, काव्यरचना में, लोकों को तीन, सात अथवा चौदह संख्या से युक्त वर्णन करे और न दीखनेवाली भी कीर्ति को श्वेतरूप में, तथा अकीर्ति को कृष्णरूप में वर्णन करे ॥१८॥

वारणं शुभ्रमिन्द्रस्य चतुरः सप्त वाम्बुधीन् ।
चतस्रः कीर्तयेद् वाष्टौ दश वा ककुभः क्वचित् ॥१९॥

अन्वय—इन्द्रस्य वारणं शुभ्रम्, अम्बुधीन् चतुरः सप्त वा, ककुभः चतस्रः अष्टौ वा, क्वचित् दश वा कीर्तयेत् ।

पदार्थ—यद्यपि सामान्येन गजानां वर्णः कृष्णो दृश्यते, तथापि इन्द्रस्य–देवराजस्य, वारणं–गजमैरावतं शुभ्रम्–श्वेतम्, अम्बुधीन्–समुद्रान्, चतुरः–पूर्वपश्चिमोत्तरदक्षिणभेदेन चतुःसंख्यायुक्तान्, सप्त वा–लवण इक्षु–क्षीर–दधि–घृत सुरा–सलिलभेदेन सप्तसंख्यायुक्तान् वा, ककुभः–दिशः, चतस्रः–पूर्वपश्चिमोत्तरदक्षिणभेदेन चतुःसंख्याः, अथवा तत्रैव आग्नेयी–नैर्ऋती–वायवी–ऐशानी इत्येतासां चतसृणां विदिशानां योजनेन अष्टौ, तत्रापि ऊर्ध्वदिगधोदिक्प्रक्षेपात् क्वचित्–सत्यामपेक्षायां दश वा कीर्तयेत्–वर्णयेत् ।

भावार्थ—इन्द्र के हाथी का सफेद रंग वर्णन करे । समुद्र, चार अथवा सात वर्णन करने चाहियें । इसी प्रकार दिशाओं को चार, आठ अथवा कहीं दस संख्या में वर्णन करना चाहिये ॥१९॥

बवयोर्डलयोश्चाभेदमुपदिशति—

यमकश्लेषचित्रेषु बवयोर्डलयोर्न भित् ।
नानुस्वारविसर्गौ च चित्रभङ्गाय सम्मतौ ॥२०॥

अन्वय—यमकश्लेषचित्रेषु बवयोः डलयोः भित् न । अनुस्वारविसर्गौ च चित्रभङ्गाय न सम्मतौ ।

पदार्थ—यमक–श्लेष–चित्रेषु–एतदाख्येषु अलङ्कारविशेषेषु, बवयोः–बकारवकारयोः, तथा डलयोः–डकारलकारयोश्च मिथः, भित्–भेदो न गण्यत इति शेषः । अनुस्वारविसर्गौ च–अनुस्वारश्च विसर्गश्च तौ, चित्र-भङ्गाय–चित्रस्य काव्यविशेषस्य हारबन्धखड्गबन्धादिरूपस्य भङ्गाय विना-शाय नाशाय, न सम्मतौ–नानुमतौ, न कथितावित्यर्थः । चित्रबन्धेषु सन्ता-

गुरुः स्यात् । बुधैः प्रायशः चादयः पादादौ न च वक्तव्याः ।

पदार्थ —अनर्धान्तपादान्ते–अर्धस्यान्त अर्धान्त ,पादस्यान्त पादान्त , अर्धान्तश्चासौ पादान्तश्चेति अर्धान्तपादान्त , द्वितीयचतुर्थपादान्त इत्यर्थ , न अर्धान्तपादान्त अनर्धान्तपादान्त , प्रथमतृतीयपादान्त इत्यर्थ , तस्मिन् प्रथमतृतीयपादान्ते, अपिशब्दात् द्वितीयचतुर्थपादान्ते चेत्यर्थ । अशैथिल्ये-शिथिलस्य भाव शैथिल्य न शैथिल्यम् अशैथिल्य तस्मिन्, बन्धस्य दाढ्य सतीत्यर्थ , लघु –एकमात्रिको वर्ण , गुरु –द्विमात्रिक , स्यात् भवेत्, बन्धस्य दार्ढ्यार्थे लघुरपि वर्णा गुरुत्वेन गण्यत इति भाव । बुधै –विद्वद्भि , प्रायश –प्रायेण, चादय –च वा तु हि प्रभृतय , पादादौ–पादस्य आदौ प्रारम्भे, न च वक्तव्या –नैव प्रयोक्तव्या इत्यर्थ । प्रायश इत्युक्ते केषाचित् रे धिक् हे हन्त प्रभृतीना पादादौ योजनेऽपि न दोष इति बोध्यम् ।

भावार्थ—प्रथम और तृतीय पादों के अन्त में, बन्ध की दृढ़ता के लिए लघुवर्ण को भी गुरु के समान उच्चारण करना चाहिए । विद्वान् कवियों को उचित है कि वे प्राय पाद के प्रारम्भ में च वा आदि अव्ययों का प्रयोग न करें ॥१७॥

**अथ श्लोकद्वयेन विशेषान्तरमाह—**

**भुवनानि निबध्नीयात् त्रीणि सप्त चतुर्दश ।**
**अप्यदृश्यां सितां कीर्तिमकीर्तिंश्च ततोऽन्यथा ॥१८॥**

**अन्वय —[ कवि ] भुवनानि, त्रीणि सप्त चतुर्दश [ वा ] निबध्नीयात्, अदृश्याम् अपि कीर्तिं सिताम् [अदृश्यामपि] अकीर्तिं च तत अन्यथा [ निबध्नीयात् ]।**

पदार्थ —कवि भुवनानि–विष्टपानि, जगन्ति, त्रीणि स्वर्गमर्त्यपाताल भेदेन त्रित्वसख्याविशिष्टानि, सप्त–भूर्भुव स्वर्महर्जनतप सत्यलोकभेदेन सप्त सख्यायुक्तानि वा, चतुर्दश पूर्वप्रतिपादितानीमानि सप्त, तल वितल सुतल नितल-तलातल रसातल पातालरूपाणि च सप्त, एव मिलित्वा चतुर्दशसख्य कानि वा, निबध्नीयात्–काव्यरचनायां निरूपयेदित्यर्थ । किंच अदृश्याम्– अमूर्तामचक्षुर्विषयीभूतामपि, कीर्तिं–यश , सितां–श्वेतां शुभ्रम्, अदृश्यामपि अकीर्तिम्–अपराधं, ततोऽन्यथा–शुभ्रयशसोऽन्यप्रकारामसितां कृष्णामित्यर्थ । निबध्नीयात्–काव्यबन्धे प्रदर्शयेदिति ।

**वाला न संयमिताः, वियोगिनीभिः तत्कामिनीभिश्च मुहुर्महीपातविधूसराङ्गाः वाला न संयमिताः ।**

पदार्थ—हे विभो ! राजन् ! दयार्द्रेण–कृपापरवशेन सता, त्वया–भवता एव, न केवलं रिपूणां–शत्रूणाम्, बाला–पुत्रा, न संयमिता–न बद्धा, अपि तु वियोगिनीभिः–त्वया निर्जितत्वात् पतिविरहविधुराभिः, तत्कामिनीभिश्च–शत्रूणामङ्गनाभिरपि, मुहुः–वारं वारं सातत्येन, महीपातविधूसराङ्गाः–मह्यां पृथिव्यां पातेन लुण्ठनेन विधूसराणि धूलिमिश्रितानि अङ्गानि अवयवा येषां तथाभूताः वालाः–अत्र बवयोरभेदेन वालाः केशा इत्यर्थः, न संयमिताः–न बद्धा इत्यर्थः । अत्र 'वाला' इति श्लिष्टपदे बवयोरभेदः प्रदर्शित एवेति ।

भावार्थ—हे राजन् ! दयालु हुए केवल आपने ही शत्रुओं के बालकों को नहीं बाधा, यह बात नहीं है, किन्तु पतियों से वियुक्त हुई शत्रुओं की कामिनियों ने भी, बारबार जमीन में लोटने से मलिन हुए अपने बाल अर्थात् केशों को नहीं बाधा ॥२२॥

श्लेषे डलयोरभेदमुदाहरति—

देव ! युष्मद्यशोराशिं स्तोतुमेनं जडात्मकम् ।
उत्कण्ठयति मां भक्तिरिन्दुलेखेव सागरम् ॥२३॥

अन्वय—हे देव ! युष्मद्यशोराशिं स्तोतुम्, भक्तिः, इन्दुलेखा जडात्मकं सागरमिव, एनं जडात्मकं माम् उत्कण्ठयति ।

पदार्थ—हे देव ! राजन् ! युष्मद्यशोराशिं–युष्माकं यशसां राशिं सावशेष कीर्तिकलापम्, स्तोतुं–वर्णयितुम्, भक्तिः–भवद्विषयिणी प्रीतिः, इन्दुलेखा–इन्दोर्लेखा चन्द्रमसः कला, जडात्मकम्–अत्र डलयोरैक्यात् जलात्मकम्, जलमेव आत्मा स्वरूपं यस्य स जडात्मा, जडात्मा एव जडात्मकः, स्वार्थे कः प्रत्ययः, जलमयमित्यर्थः । सागरं–समुद्रमिव, एनं–प्रत्यक्षभूतं समीपस्थं जडात्मकं–जडो ज्ञानरहित आत्मा यस्य तादृशं मूर्खमित्यर्थः, माम् उत्कण्ठयति–उत्सुकयति प्रेरयतीत्यर्थः । अत्र जडात्मकम् इति श्लिष्टपदे डलयोरभेदः ।

भावार्थ—हे राजन् ! आपकी यशोराशि का वर्णन करने के लिये, यह

चप्यनुस्वारविसर्गौ सत्तामपेक्षाया न गण्येते, अविद्यमानवन्मन्येते इति भाव ।

भावार्थ—यमक, श्लेष और चित्र नामक अलकारों में बकार वकार तथा डकार-लकार का परस्पर भेद नहीं समझा जाता, एव अनुस्वार और विसर्ग, चित्रबन्ध के विघातक नहीं माने जाते। अर्थात् आवश्यकता होने पर उन्हें, अविद्यमान के समान मान लिया जाता है ॥२०॥

तत्र यमके बवयोर्डलयोश्चाभेदमुदाहरति—

शङ्कमानैर्महीपाल ! कारागारविडम्बनम् ।
त्वद्वैरिभिः सपत्नीकैः श्रितं बहुविडम्बनम् ॥२१॥

अन्वय—हे महीपाल ! कारागारविडम्बनं शङ्कमानैः सपत्नीकैः त्वद्वैरिभिः बहुविड(लं)व(ब)नं श्रितम् ।

पदार्थ—वस्यचिन्त्यपरय पराक्रमप्रशंसा राज्ञिवयम् । हे महीपाल ! क्षितिपते ! कारागारविडम्बन–त्वदीये कारारूपे आगारे तवापराधिजनबन्धनगृहे, विडम्बन–कठोरकदर्थन श्रमादिजनितकायक्लेशम्, शङ्कमानैः–चिन्तयद्भि' तर्कयद्भिरित्यर्थ, पलायनमन्तरेण नास्त्यस्माकं कथमप्यस्माच्छत्रो महाबलशालिनो मोक्ष इति बिभ्यद्भिरिति भाव, अत एव सपत्नीकै–सकलत्रै, त्वद्वैरिभि–तव शत्रुभि, बहुविडम्' अत्र डलयोरभेदेन 'बहुविलम्' इति पद बोध्यम्, बहूनि बिलानि सर्पादिकीटकोटराणि यत्र एवभूतम्, सर्पादिविवराकीर्णमित्यर्थ । बनम्–अत्र बवयोरभेदेन 'वनम्' इति पद बोध्यम्, अरण्यमित्यर्थ । श्रितम्–आश्रयत्वेन अवलम्बितमिति । अत्र द्वितीयचतुर्थपादान्ते 'विडम्बनम्' इति समानानुपूर्वीकत्वेन यमकालङ्कार । तत्र च डलयोर्बवयोश्चाभेदेनार्थप्रतीति प्रदर्शिता ।

भावार्थ—हे राजन् ! कैदखाने में अत्यधिक क्लेशों की कल्पना करने वाले, परिवारसहित, तुम्हारे शत्रुओं ने डर के मारे, भयानक जगलों का आश्रय लिया है ॥२१॥

श्लेषे बवयोरभेदमुदाहरति—

त्वया दयार्द्रेण विभो ! रिपूणां न केवलं संयमिता न बालाः ।
तत्कामिनीभिश्च नियोगिनीभिः मुहुर्महीपातविधूसराङ्गाः ॥२२॥

अन्वय—हे विभो ! दयार्द्रेण त्वया न केवल रिपूणां

योग्य, इन्द्र के भी रत्नमय सिंहासन को कँपा देने वाले, शीघ्र ही सम्पूर्ण दुःखसमूह का नाश करने वाले, पापरूपी अन्धकार का ध्वंस करने वाले शरीर से युक्त और अत्यधिक तथा दोषरहित तप से केशलुञ्चन के सिद्धान्त को मानने वाले आपका अथवा देव का दर्शन करता हूं ॥२४॥

## हारबन्धचित्रम् ।




अथ चित्रे बवयोरभेदमुदाहरति—

प्रचण्डबल ! निष्काम ! प्रकाशितमहागम ! ।
भावतत्त्वनिधे ! देव ! भालमत्राद्भुता तव ॥२५॥

भक्ति चन्द्रमा की कला जैसे जलमय समुद्र को उत्कण्ठित करती है, इसी तरह मुग्ध मूर्ख को उत्कण्ठित कर रही है ॥२३॥

इदानीं चित्रालङ्कारे डलयोरभेदमुदाहरति—

चन्द्रेडितं चट्टुलितस्वरधीतसार-
रत्नासनं रभसकल्पितशोकजातम् ।
पश्यामि पापतिमिरक्षयकारकाय-
मल्पेतरामलतपःकचलोपलोचम् ॥२४॥

अन्वयः—चन्द्रेडितं चट्टुलितस्वरधीतसाररत्नासनं रभसकल्पितशोकजातं पापतिमिरक्षयकारकायम् अल्पेतरामलतपःकचलोपलोचं [ भयन्तं, देवं वा ] पश्यामि ।

पदार्थ—चन्द्रेडित–चन्द्रेण ईडित, चन्द्र इव वा ईडित स्तुततम्, सर्वाह्लादकरमित्यर्थः । चट्टुलितस्वरधीतसाररत्नासनं–स्वरित्यव्ययम्, स्वः–स्वर्गे अधीतो विख्यात उपवर्णितो वा सार उत्कर्षो बल वा यस्य स स्वरधीतसार, इन्द्र इत्यर्थः । चट्टुलित चपलीकृत कम्पित वा स्वरधीतसारस्य रत्नासन रत्नमय सिंहासन येन तथाभूतम् । यद्वा–स्वरधीतो मेरु, तस्य सार रत्नमयमासन, चट्टुलितं स्वरधीतस्य मेरुशैलस्य सारं रत्नासनं येन स तम् । रभसकल्पितशोकजातम्–रभसेन वेगेन झटित्येव कल्पित समुत्पादितं शोकजात दुःखसमूह, शत्रूणामिति शेष, येन तम्, अथवा रभसेन हर्षेण 'रभसो वेगहर्षयो' इत्यमरः, कल्पित खण्डित छिन्न वा शोकजात दुःखसमूह स्वजनानां येन [illegible] तम्, पापतिमिरक्षयकारकायम्–पापान्येव तिमिराणि अन्धकारा, तेषां क्षयं नाश करोतीति पापतिमिरक्षयकार काय शरीर यस्य स तम्, अल्पेतरामलतप कचलोपलोचम्–अल्पेतर–प्रभूतम् अमल निर्मलं निर्दोष वा यत्तप तेन कचानां केशानां लोपे उत्पाटने लुञ्चने वा लोच–दर्शनं मतिर्यस्य तम् । तथाविध भवन्त देव वा पश्यामि । अत्र हारव पवित्रे 'चन्द्रेडितम्' इति डकारस्य 'चट्टुलितम्' इति लकारस्य चाभेदेन सामञ्जस्य भवति ।

भावार्थ—मैं, चन्द्र के समान पूजनीय अथवा चन्द्र से पूजा किये जाने

चित्रे छत्रबन्धान्तरमुदाहरति—

भवकाननमत्तेभ ! भग्नमायातमःप्रभ ! ।
विनयात् त्वां स्तुवे वीर ! विनतत्रिदशेश्वर ! ॥२६॥

अन्वयः—[हे] भवकाननमत्तेभ ! भग्नमायातमःप्रभ ! विनतत्रिदशेश्वर ! वीर ! विनयात् त्वां स्तुवे ।

पदार्थः—हे भवकाननमत्तेभ—भवः—संसार एव, काननं-गहनम्, तत्र मत्तः-उद्धतः, भयरहित इत्यर्थः, इभः—गजेन्द्रः, तत्सम्बुद्धौ, मत्तो यथा गजो निर्भीकतया आरण्यानि वृक्षमूलान्युत्पाटयति, तथैव संसारमूलोच्छेदे निपुण इत्यर्थः । भग्नमायातमःप्रभ—भग्ना—विनाशिता, मायातमसः—अविद्यारूपस्यान्धकारस्य, प्रभा—विकासो विस्तारो वा येन सः, तत्सम्बुद्धौ, अथवा भग्नं—समुन्मूलितं मायातमः माया अविद्या एव तमस्तिमिरं येन, तथा प्रकर्षेण भाति दीप्यते इति प्रभः, भग्नमायातमश्चासौ प्रभश्चेति कर्मधारयः, तत्सम्बुद्धौ, अप्रतिमतेजोयुक्त इत्यर्थः । विनतत्रिदशेश्वर—विनतः—विशेषेण नम्रीभूतः, त्रिदशेश्वरः—देवराजो यस्य, तत्सम्बुद्धौ, वीर-शूर, विनयात् अत्र ल्यब्लोपे पञ्चमी, विनयमनुसृत्य इत्यर्थः, त्वां—भवन्तम्, स्तुवे—स्तौमि । छत्रबन्धात्मके पूर्वपद्ये बवयोरभेद उदाहृतः । इदं तु प्रसङ्गवशात् छत्रबन्धस्योदाहरणान्तरमात्रं प्रदर्शितम् ।

छत्रबन्धचित्रम् ।



**अन्वयः—[ हे ] प्रचण्डबल ! निष्काम ! प्रकाशितमहागम ! भावतत्त्वनिधे ! देव ! अत्र तव भा अलम् अद्भुता [ वर्तते ]।**

पदार्थ—हे प्रचण्डबल ! प्रचण्डमुत्कृष्टं शत्रोः पराभावकतयाऽतिभयावहं बलं पराक्रमो यस्य, तत्सम्बुद्धौ हे प्रचण्डबल ! निष्काम-निरभिलाष, निर्गतः कामोऽभिलाषो यस्मात् स , तत्सम्बुद्धौ तथा, अथवा निकृष्टोऽपकृष्टः कामः कन्दर्पो यस्मात् तत्सम्बुद्धौ, रूपसम्पत्त्या न्यक्कृतकन्दर्प इत्यर्थः ,प्रकाशितमहागम—प्रकाशितः प्रकटीकृतः महान् आगमः शास्त्रं येन स , तत्सम्बुद्धौ, भावतत्त्वनिधे—भावानां सद्वस्तूनां तत्त्वं स्वरूपं याथार्थ्यं वा तस्य निधिः निलयः तत्सम्बुद्धौ, सकलार्थविदित्यर्थः । अथवा भावोऽभिप्रायश्चित्तगतः सङ्कल्पविशेषः , स एव तत्त्वं रहस्यं तस्य निधिः तत्सम्बुद्धौ, देव—हे दिव्यगुणयुक्त अत्र—विश्वनयेऽपि, तव—त्वत्सम्बन्धिनी, भा—दीप्तिः प्रभावः इति यावत्, अलम्—अतिशयेन, अद्भुता—आश्चर्यकारिणी वर्तते इति शेषः । अत्र छत्रबन्धचित्रे, 'बल' इति पदे बकारस्य 'भाव' इति पदे वकारस्य अभेदेन सामञ्जस्य भवति ।

भावार्थ—हे उत्कृष्ट शक्ति सम्पन्न ! कामनाओं से रहित ! महान् शास्त्रों का प्रकाश करने वाले ! सम्पूर्ण पदार्थों की वास्तविकता को जानने वाले देव ! इस सकल विश्व में आपका ऐश्वर्य अत्यधिक प्रकाशित है ॥२५॥

छत्रबन्धचित्रम् ।



# द्वितीयः परिच्छेदः ।

काव्यशरीरं निरूपयति—

संस्कृतं प्राकृतं तस्यापभ्रंशो भूतभाषितम् ।
इति भाषाश्चतस्रोऽपि यान्ति काव्यस्य कायताम् ॥१॥

अन्वयः—संस्कृतं प्राकृतं तस्य अपभ्रंशः भूतभाषितम् इति चतस्रः अपि भाषाः काव्यस्य कायतां यान्ति ।

पदार्थः—संस्कृतं-पाणिनीयादिव्याकरणप्रतिपन्ना प्रसिद्धा देववाणी, प्राकृतं-प्रकृतेः कारणभूतात् संस्कृतादागतम्, तस्य-प्राकृतस्य अपभ्रंशः-अन्यो भाषाविशेषः, भूतभाषितं-भूतानां पिशाचानां भाषितं, पैशाची भाषा इत्यर्थः, इति-एताश्चतस्रः अपि भाषाः काव्यस्य-कविकृतेः, कायतां-शरीरत्वं, यान्ति-प्राप्नुवन्ति । एताः सर्वा अपि भाषाः काव्यनिर्माणे समुपयुज्यन्त इति भावः ।

भावार्थ—संस्कृत, प्राकृत, उसका अपभ्रंश और भूतभाषा अर्थात् पैशाची भाषा—ये चारों ही भाषाएँ काव्य का अंग होती हैं । तात्पर्य यह है कि इन सब ही भाषाओं में काव्य की रचना की जाती है ॥१॥

भाषाचतुष्टयं द्वाभ्यां श्लोकाभ्यां स्पष्टयति—

संस्कृतं स्वर्गिणां भाषा शब्दशास्त्रेषु निश्चिता ।
प्राकृतं तज्जतत्तुल्यदेश्यादिकमनेकधा ॥२॥
अपभ्रंशस्तु यच्छुद्धं तत्तद्देशेषु भाषितम् ।
यद्भूतैरुच्यते किञ्चित् तद्भौतिकमिति स्मृतम् ॥३॥

अन्वयः—शब्दशास्त्रेषु निश्चिता स्वर्गिणां भाषा संस्कृतम् (इत्युच्यते), तज्जतत्तुल्यदेश्यादिकम् अनेकधा प्राकृतम्, तत्तद्देशेषु यत् शुद्धं भाषितं (तत्) तु अपभ्रंशः, भूतैः यत् किञ्चिद् उच्यते, तद् भौतिकम् इति स्मृतम् ।

पदार्थ.—शब्दशास्त्रेषु-शब्दसाधुत्वप्रतिपादकेषु पाणिनीयादिव्याकरणशास्त्रेषु, निश्चिता-विपरीता, स्वर्गिणां-देवानां विदुषां वा भाषा-भाषणं

भावार्थ—हे संसार रूप वन में मत्त गज के समान माया रूप अन्धकार को नष्ट करने वाले, देवताओं के राजा इन्द्र से भी बड़े बड़े वीर! विनयपूर्वक मैं आपकी स्तुति करता हूं ॥२६॥

परिच्छेदार्थमुपसंहरति—

अधीत्य शास्त्राण्यभियोगयोगा-
दभ्यासवश्यार्थपदप्रपञ्चः ।
तं तं विदित्वा समयं कवीनां
मनःप्रसत्तौ कवितां विदध्यात् ॥२७॥

अन्वयः—अभियोगयोगात् शास्त्राणि अधीत्य, अभ्यासवश्यार्थपदप्रपञ्चः, कवीनां तं तं समयं विदित्वा, मनःप्रसत्तौ [कविः] कवितां विदध्यात्।

भावार्थ—वह प्रसिद्ध काव्य दो प्रकार का होता है—एक छन्दोयुक्त और दूसरा छन्दोरहित। पहले को पद्य और दूसरे को गद्य कहते हैं। जिसमें गद्य और पद्य दोनों हों, वह मिश्रकाव्य कहाता है ॥४॥

दोषपरिहारार्थं निर्दोषकाव्यप्रशंसामाह—

अदुष्टमेव तत्कीर्त्यै स्वर्गसोपानपङ्क्तये ।
परिहार्यानतो दोषांस्तानेवादौ प्रचक्ष्महे ॥५॥

अन्वयः—अदुष्टम् एव तत् कीर्त्यै स्वर्गसोपानपङ्क्त्यै [भवति], अतः परिहार्यान् दोषानेव आदौ प्रचक्ष्महे।

पदार्थः—अदुष्टं-दोषरहितमेव, तत्-काव्यम्, कीर्त्यै-यशसे, एवं स्वर्गसोपानपङ्क्तये-स्वर्गस्य तदात्मकस्य आवासस्य सोपानपङ्क्तिरिव नि श्रेणितातिरिवेति तस्यै, भवतीति शेषः। सुकविकीर्तिः स्वर्गेऽपि विस्तीर्यमाणात्वादिति भाव। अत-अस्मात् कारणात्, परिहार्यान्-परिहर्तुं परित्यक्तुं योग्यान्, तान्-अलङ्कारशास्त्रप्रसिद्धान्, वक्ष्यमाणान् वा, दोषान्-अनर्थकादीन्, एव आदौ-प्रथमतः, प्रचक्ष्महे-निरूपयामः।

भावार्थ—दोष रहित काव्य ही यश और स्वर्ग तक पहुंचाने के लिये उपयोगी हो सकता है। इसलिए प्रथम उन दोषों का ही निरूपण करते हैं, जो काव्य-रचना में अवश्य परित्याज्य हैं ॥५॥

काव्ये हि दोषास्त्रिविधा भवन्ति—पददोषाः, वाक्यदोषाः, वाक्यार्थदोषाश्च। तत्रादौ पदगतानष्टौ दोषानाह—

अनर्थकं श्रुतिकटु व्याहतार्थमलक्षणम् ।
स्वसङ्केतप्रक्लृप्तार्थमप्रसिद्धमसम्मतम् ॥६॥
ग्राम्यं यच्च प्रजायेत पदं तन्न प्रयुज्यते ।
क्वचिदिष्टा च विद्वद्भिरेषामप्यपदोषता ॥७॥

अन्वयः—अनर्थकं श्रुतिकटु व्याहतार्थम् अलक्षणं स्वसङ्केतप्रक्लृप्तार्थम् अप्रसिद्धम् असम्मतं यच्च पदं ग्राम्यं प्रजायेत तत् न प्रयुज्यते, विद्वद्भिश्च क्वचिद् एषाम् अपदोषता अपि इष्टा।

पदार्थ—अनर्थकं-न विद्यते अर्थः प्रयोजनं यस्य तदनर्थकं निष्प्रयोजन-

संस्कृतम्-इति नाम्ना उच्यते बुधैरिति शेषः, तज्जतत्तुल्यदेश्यादिकं-तज्जं-तस्मात् संस्कृतात् जातं समुत्पन्नम्, तत्तुल्यं-तेन संस्कृतेन तुल्यं सदृशम्, देश्यं-देशेषु भवम्, इत्येतानि आदौ यस्य-तत्प्रभृतिकमित्यर्थः, तत् तज्जतत्तुल्यदेश्यादिकम्, अनेकधा-बहुप्रकारकम्, प्राकृतम्-इति नाम्ना व्यपदिश्यते।

तत्तद्देशेषु-तेषु तेषु देशेषु कर्णाटपाञ्चालादिषु, यत् शुद्धम्-अन्यभाषाभिरमिश्रितं साधु, भाषितं-भाषणम्, तत् अपभ्रंशः-इति नाम्ना कथ्यते, भूतैः-पिशाचैर्देवयोनिविशेषैर्यत् किंचिदुच्यते-उच्चार्यते, तद् भौतिकं-पैशाचिकमिति स्मृतं-कथितम्। संस्कृतादन्यदपभ्रंशतया व्यपदिश्यत इति केचित्।

भावार्थ—पाणिनीयादि व्याकरण शास्त्रों में निश्चित की हुई देवताओं की भाषा 'संस्कृत' कहलाती है। तथा संस्कृत से उत्पन्न हुई उसके समान और भिन्न २ देशों में अनेक प्रकार से बोली जाने वाली प्राकृत भाषा कहलाती है, यह कई तरह की होती है। उन २ देशों में अन्य भाषाओं की मिलावट से रहित जो शुद्ध भाषा बोली जाती है, उसे अपभ्रंश कहते हैं। और जो भाषा भूत अर्थात् पिशाच ( देवयोनि विशेष ) आदि के द्वारा बोली जाती है, उसका नाम 'भौतिक' कहा जाता है ॥२,३॥

**वाङ्मयस्य द्वैविध्यमाह—**

**छन्दोनिबद्धमच्छन्द इति तद् वाङ्मयं द्विधा।**
**पद्यमाद्यं तदन्यच्च गद्यं मिश्रं च तद् द्वयम् ॥४॥**

**अन्वयः—तद् वाङ्मयं छन्दोनिबद्धम् अच्छन्द इति द्विधा (भवति), आद्यं तत् पद्यम्, अन्यत् च गद्यम्, तद् द्वयं च मिश्रं ( कथ्यते )।**

पदार्थ—तत्-प्रसिद्धम् वाङ्मयं-वाचां विकारः, विकारार्थे मयट्, वैचे कृतिरूपं काव्यमित्यर्थः, छन्दोनिबद्धं-छन्द शास्त्रप्रतिपादितलक्षणानुरूपम्, अच्छन्द-छन्द शास्त्रोक्तमात्रागणादिलक्षणरहितम्, इति द्विधा-द्विप्रकारकं भवतीति शेषः। तत्र आद्यं-प्रथमं छन्दोनिबद्धम्, तत्-काव्यम्, पद्यं-इति नाम्ना व्यवहियत इति शेषः। अन्यद्-द्वितीयं छन्दोरहितं च, गद्यम्-इति नाम्ना व्यपदिश्यते। तद् द्वयं गद्यपद्योभयात्मकं काव्यं च मिश्रं-इति नाम्ना कथ्यत इति शेषः। चम्पू, नाटकं च मिश्रं काव्यं भवति, तयोर्गद्यपद्योभयरूपत्वादित्यर्थः।

भावार्थ—प्रकरण में जो पद उपयोगी न हो, वह अनर्थक कहा जाता है। जैसे—'मैं गणपति की वन्दना करता हूँ' इस श्लोककथित वाक्य में 'सम्बोदर' 'हि' और 'तु' पद अनर्थक हैं ॥८॥

अथ श्रुतिकटुदोषं सोदाहरणमाह—

निष्ठुराक्षरमत्यन्तं बुधैः श्रुतिकटु स्मृतम् ।
एकाग्रमनसा मन्ये स्रष्ट्रेयं निर्मिता यथा ॥९॥

अन्वयः—अत्यन्तं निष्ठुराक्षरं बुधैः श्रुतिकटु स्मृतम् । यथा—मन्ये इयम् एकाग्रमनसा स्रष्ट्रा निर्मिता ।

पदार्थः—अत्यन्तं-भृशम्, निष्ठुराक्षरं-निष्ठुराणि कठोराणि क्लेशेनोच्चारणीयानि अक्षराणि वर्णा यस्मिंस्तत्, कर्कशवर्णवत् पदमित्यर्थः, बुधैः-विद्वद्भिः, श्रुतिकटु-श्रवणेन्द्रियपीडाकरत्वात् तन्नामकं दुष्टम्, स्मृतं-पठितम् । उदाहरणमाह-यथा, मन्ये-सम्भावयामि, इयं-नारी, एकाग्रमनसा-एकाग्रं विषयान्तराऽलग्नं मनो यस्य तेन अवहितचेतसा, स्रष्ट्रा-विधात्रा, निर्मिता-घटिता इति । अत्र 'स्रष्ट्रा' इति श्रुतिकटु पदम् ।

भावार्थ—अत्यन्त कर्कश अक्षरों वाले पद को विद्वानों ने श्रुतिकटु कहा है। जैसे-'मैं समझता हूँ, इस नारी को स्रष्टा (ब्रह्मा) ने बहुत ध्यानपूर्वक बनाया है' इस उपर्युक्त श्लोकवाक्य में 'स्रष्ट्रा' पद श्रुतिकटु है ॥९॥

सोदाहरणं व्याहतार्थमाह—

व्याहतार्थं यदिष्टार्थबाधकार्थान्तराश्रयम् ।
रतस्त्वमेव भूपाल ! भूतलोपकृतौ यथा ॥१०॥

अन्वयः—यत् [पदम्] इष्टार्थबाधकार्थान्तराश्रयं [तत्] व्याहतार्थम् । यथा—भूपाल ! त्वमेव भूतलोपकृतौ रतः ।

पदार्थः—यत्-पदम्, इष्टार्थबाधकार्थान्तराश्रयम्-इष्टस्य अभिप्रेतस्य विवक्षितस्य, अर्थस्य-प्रतिपाद्यस्य, बाधकं-विरोधिनम्, अर्थान्तरम्-अन्यमर्थम्, आश्रयति अवलम्बत इति तथा, निजाभिलषितात् प्रतिकूलार्थप्रतीतिकृदिति भावः । तद् व्याहतार्थं-तन्नामकं दुष्टं पदमभिधीयत इत्यर्थः । तत्रोदाहरणमाह । यथा—हे भूपाल-पृथ्वीपते ! त्वमेव-भवान् एकः, त्वां विना नान्यः —क्षितिप उपकारार्थं, भूतलोपकृतौ-भूतलस्य सर्वस्याः पृथिव्याः उपकृतौ-

मित्यर्थः, श्रुतिकटु-श्रुतौ श्रवणे कटु प्रतिकूलं श्रुतिकर्कशमित्यर्थः । व्याहतार्थ-व्याहतो विरुद्धोऽर्थो यस्य तत्, अलक्षणं-न विद्यते लक्षणं शब्दशास्त्रव्युत्पादनं यस्य तत्, व्याकरणहीनमित्यर्थः । स्वसङ्केतप्रक्लृप्तार्थं-स्वसङ्केतेनैव निजकल्पितसङ्केतेनैव प्रक्लृप्तः सिद्धोऽर्थो यस्य तत्, स्वाभिप्रायकल्पितमित्यर्थः । अप्रसिद्धं-शास्त्रे क्वचिदुक्तमपि यत् न विख्यातं तत् । असम्मतम्-अनभिमतम् । पदमिति सर्वत्राभिसम्बध्यते । यच ग्राम्यं-ग्रामे भवम्, ग्रामीणजनवचनसदृशं पदं प्रजायेत-प्रादुर्भवेत्, तत्र प्रयुज्यते-काव्येषु तादृशस्य पदस्य प्रयोगो न जायते, दुष्टत्वादित्यर्थः । विद्वद्भिश्च कवितामर्मज्ञैः पूर्वाचार्यैश्च, क्वचित्-केषुचित् स्थानेषु, एषाम्-अनर्थकादीनाम्, अपदोषता-निर्दोषता अपि, इष्टा-प्रतिपादितेत्यर्थः । यथा निरर्थकत्वं संश्लेषे, श्रुतिकटुत्वं मत्ते वक्तरि, व्याहतार्थत्वं मूर्च्छादौ, अलक्षणत्वं मूढे वक्तरि, अप्रसिद्धत्वं बाले उद्धते वा वक्तरि, असम्मतत्वं नीचे कुपिते वा वक्तरि, ग्राम्यत्वं च हास्यादौ, दोषतामपहाय गुणतामेव भजन्ते । स्वसङ्केतप्रक्लृप्तार्थत्वं तु नित्यदोष एव ।

भावार्थ—अनर्थक, श्रुतिकटु, विरुद्ध अर्थवाले, व्याकरण से हीन, मनमाने अर्थों से युक्त, अप्रसिद्ध, अनभिमत तथा ग्राम्य पदों का प्रयोग, कविता में कभी न करना चाहिए। क्योंकि ये कविता के दोष कहे जाते हैं। प्राचीन विद्वानों ने इनको कहीं कहीं दोष नहीं भी माना ॥६,७॥

तत्रानर्थकं सोदाहरणं निरूपयति—

प्रस्तुतेऽनुपयुक्तं यत् तदनर्थकमुच्यते ।
यथा विनायकं वन्दे लम्बोदरमहं हि तु ॥८॥

अन्वयः—प्रस्तुते यत् अनुपयुक्तं तद् अनर्थकम् उच्यते । यथा—अहं लम्बोदरं विनायकं हि तु वन्दे ।

पदार्थः—प्रस्तुते-प्रकृते, प्रारब्धेऽर्थे, यत्-पदम्, अनुपयुक्तम्-अनुपयोगि प्रयोजनरहितम्, तदनर्थकमुच्यते, काव्ये तथाविधपदप्रयोगोऽनर्थकदोष इति भाव. । तदुदाहरणं दर्शयति—यथेति । यथा-अहं लम्बोदरं विनायकं-गणपतिम्, वन्दे-प्रणमामि । अत्र 'हि तु' इति पदद्वयं 'लम्बोदरम्' इति पदं च निरर्थकमेव ।

**अन्वयः—नेयार्थान्तरवाचकं स्वसङ्केतप्रक्लृप्तार्थम् [ उच्यते ] । यथा—अयं शैलः पुष्पितैः वानरध्वजैः विभाति ।**

पदार्थ —नेयार्थान्तरवाचकं–नीयत इति नेयं लक्ष्यं न तु अभिधाशक्तिबोध्यम्, नेयस्य अर्थान्तरस्य–अन्यार्थस्य, वाचकम्–अभिधायकम् पदं स्वसङ्केतप्रक्लृप्तार्थम्–तदाख्यदोषदुष्टमुच्यत इति शेष । यत्र अभिधावृत्तिमपहाय स्वेच्छया वृत्त्यन्तरेण अन्यार्थकल्पना क्रियते, तत्रायं दोषः । यथा—अय–पुरोवर्ती, शैल–पर्वत, पुष्पितै–सञ्जातकुसुमै, वानरध्वजै–अर्जुनवृक्षै, विभाति–शोभते । अत्र 'वानरध्वजै' इति पदे प्रकृतो दोष । वानरध्वजपदेन हि अर्जुन पाण्डव उच्यते, न तु अर्जुनो वृक्ष । अर्जुननामसादृश्येन वृक्षार्थग्रहणे नेयार्थता दोष । यत्र पुन समस्तकविसङ्केत, तत्र नायं दोष । यथा रथाङ्गशब्दश्चक्रवाकनाम्नि पक्षिणि, द्विरेफशब्दो भ्रमरे, द्विकशब्दश्च काके शक्त ।

भावार्थ—जिस पद से अभिधावृत्ति को छोड़ कर अन्य किसी वृत्ति के द्वारा, अर्थान्तर का बोधन कराया जाय, वहां स्वसङ्केतप्रक्लृप्तार्थ दोष होता है । जैसे—'यह पहाड़ फूले हुए अर्जुन वृक्षों से सुशोभित हो रहा है' यहां अर्जुन वृक्ष के लिये 'वानरध्वज' पद दिया गया है । यह पद केवल अर्जुन पाण्डव के लिये प्रयुक्त होता है, वृक्ष के लिये नहीं । नाम साम्य से यहां वृक्ष के लिये प्रयुक्त कर दिया गया है, इसलिये यहां नेयार्थता दोष है । इसी को 'स्वसङ्केतप्रक्लृप्तार्थ' कहते हैं ॥१२॥

**अप्रसिद्धं सोदाहरणमाह—**

> **यस्य नास्ति प्रसिद्धिस्तद् अप्रसिद्धं विदुर्यथा ।**
> **राजेन्द्र ! भवतः कीर्त्तिश्चतुरो हन्ति वारिधीन् ॥१३॥**

**अन्वय.—यस्य प्रसिद्धिः नास्ति तद् अप्रसिद्धं विदुः । यथा—राजेन्द्र ! भवतः कीर्तिः चतुरो वारिधीन् हन्ति ।**

पदार्थ —यस्य–पदस्य, यस्मिन्नर्थे प्रसिद्धि –प्रयोगो व्यवहारो वा नास्ति–न विद्यते, तस्मिन्नर्थे पठितमपि पदमभिधानिकैर्न प्रयुज्यत इति भाव । तद् अप्रसिद्ध–तदाख्यदोषदुष्टम्, विदु –जानन्ति बुधा इति शेष । यथा—हे राजेन्द्र !–महाराज ! भवत –श्रीमत , कीर्ति –यश, चतुर –चतु संख्या-

उपकारे शुभसम्पादने, रतः—संलग्न इति। अत्र 'भूतलोपकृतौ' इति पदे भूतानां प्राणिनां लोपकृतौ नाशकरणे, इति स्वाभिप्रेतविरुद्धार्थप्रतीतेः व्याहतार्थत्वं दोषः।

भावार्थ— जिस पद में अभिप्रेत अर्थ से भिन्न, कोई विपरीत अर्थ भी प्रतीत हो, वहां व्याहतार्थ दोष होता है। जैसे—'राजन् ! आप अकेले भूतल के उपकार में लगे हैं' इस उपर्युक्त श्लोकवाक्य में 'भूतलोपकृतौ' पद में प्राणियों का नाश करने में लगे हैं' यह विपरीत अर्थ भी निकलता है ॥१०॥

अलक्षणं सोदाहरणं लक्षयति—

शब्दशास्त्रविरुद्धं यत् तदलक्षणमुच्यते ।
मानिनीमानदलनो यथेन्दुर्विजयत्यसौ ॥११॥

अन्वयः—यत् शब्दशास्त्रविरुद्धं तत् अलक्षणम् उच्यते । यथा—मानिनीमानदलनः असौ इन्दुः विजयते ।

पदार्थ —यत्–पदम् शब्दशास्त्रविरुद्ध–शब्दशास्त्रं व्याकरणादि तेन विरुद्धं–प्रतिकूलं तत्प्रतिपादितनियमविपरीतमित्यर्थः, तत्–तादृक् पदम्, अलक्षणम्–अलक्षणाख्यदोषदुष्टम्, उच्यते–अभिधीयते । यथा–मानिनीमानदलन –मानिनीनां मानवतीनां युवतीनां मानं प्रणयकोपं दलयति नाशयतीति तथा, अथवा–मानिनीनां मानस्य दलन, अहंकारस्य नाशकः, तादृशः अपि युवतयश्चन्द्रोदये मन्मथोन्मादेन पतिषु मानं मुञ्चन्तीति भाव । असौ इन्दु –चन्द्रः, विजयति–सर्वोत्कर्षेण वर्तत इत्यर्थः । अत्र 'विजयति' इति परस्मैपदं व्याकरणनियमप्रतिकूलत्वाद् दुष्टम् । तत्र 'विपराभ्यां जेः' [पा० १।३।१९] इत्यनेन सूत्रेणात्मनेपदविधानात् ।

भावार्थ—जो पद, शब्दशास्त्र अर्थात् व्याकरण के प्रतिकूल हो, उसे अलक्षण दोष कहते हैं। जैसे–'मानिनी युवतियों के मान को मर्दन करने वाला चन्द्रमा विजय को प्राप्त होता है' इस वाक्य में संस्कृत क्रियापद 'विजयति' व्याकरण नियम के विपरीत है। यहां परस्मैपद न रह कर 'विजयते' ऐसा आत्मनेपद प्रयोग होना चाहिए ॥११॥

**अन्वयः—नेयार्थान्तरवाचकं स्वसङ्केतप्रक्लृप्तार्थम् [ उच्यते ]। यथा—अयं शैलः पुष्पितैः वानरध्वजैः विभाति।**

पदार्थः—नेयार्थान्तरवाचकं–नीयत इति नेयं लक्ष्यं नतु अभिधावृत्तिबोध्यम्, नेयस्य अर्थान्तरस्य–अन्यार्थस्य, वाचकम्–अभिधायकम् पदं स्वसङ्केतप्रक्लृप्तार्थम्–तदाख्यदोषदुष्टमुच्यत इति शेषः। यत्र अभिधावृत्तिमपहाय स्वेच्छया वृत्यन्तरेण अन्यार्थकल्पनांक्रियते, तत्रायं दोषः। यथा—अयं–पुरोवर्ती, शैलः–पर्वतः, पुष्पितैः–सञ्जातकुसुमैः, वानरध्वजैः–अर्जुनवृक्षैः, विभाति–शोभते। अत्र 'वानरध्वजैः' इति पदे प्रकृतो दोषः। वानरध्वजपदेन हि अर्जुनः पाण्डव उच्यते, नतु अर्जुनो वृक्षः। अर्जुननामसादृश्येन वृक्षार्थग्रहणे नेयार्थता दोषः। यत्र पुनः समस्तकविसङ्केतः, तत्र नायं दोषः। यथा रथाङ्गशब्दश्चक्रवाकलाक्षि पक्षिणि, द्विरेफशब्दो भ्रमरे, द्विकशब्दश्च काके शक्तः।

भावार्थ—जिस पद से अभिधावृत्ति को छोड़ कर अन्य किसी वृत्ति के द्वारा, अर्थान्तर का बोधन कराया जाय, वहां स्वसंकेतप्रक्लृप्तार्थ दोष होता है। जैसे—'यह पहाड़ फूले हुए अर्जुन वृक्षों से सुशोभित हो रहा है' यहां अर्जुन वृक्ष के लिये 'वानरध्वज' पद दिया गया है। यह पद केवल अर्जुन पाण्डव के लिये प्रयुक्त होता है, वृक्ष के लिये नहीं। नाम साम्य से यहां वृक्ष के लिये प्रयुक्त कर दिया गया है, इसलिये यहां नेयार्थता दोष है। इसी को 'स्वसंकेतप्रक्लृप्तार्थ' कहते हैं ॥१२॥

**अप्रसिद्धं सोदाहरणमाह—**

> यस्य नास्ति प्रसिद्धिस्तद् अप्रसिद्धं विदुर्यथा।
> राजेन्द्र! भवतः कीर्त्तिश्चतुरो हन्ति वारिधीन् ॥१३॥

**अन्वयः—यस्य प्रसिद्धिः नास्ति तद् अप्रसिद्धं विदुः। यथा—राजेन्द्र! भवतः कीर्तिः चतुरो वारिधीन् हन्ति।**

यान्, वारिधीन्-समुद्रान्, हन्ति-गच्छति प्राप्नोतीत्यर्थः । अत्र 'हन्ति' इति हन् धातुः यद्यपि 'हन् हिंसागत्यो' इति हिंसायां गतौ चोभयत्रापि पठ्यते तथापि हिंसार्थे एव प्रसिद्धि, न तु गत्यर्थे, तत्र प्रयोगाद् अप्रसिद्धत्व दोषः ।

भावार्थ—जिस पद की जिस अर्थ में प्रसिद्धि नहीं है, उस पद का उस अर्थ में प्रयोग करना 'अप्रसिद्ध' दोष कहाता है। जैसे—'हे महाराज! आपकी कीर्ति चारों समुद्रों तक जाती है, अथवा पहुंची हुई है'। इस वाक्य में 'गमन' अर्थ का बोध कराने के लिये 'हन्ति' क्रियापद का प्रयोग किया गया है। यद्यपि धातु पाठ में 'हन्' धातु गमन और हिंसा दोनों अर्थों में पढ़ा गया है, पर वह हिंसा अर्थ में ही प्रसिद्ध है। गमन अर्थ में उसका प्रयोग 'अप्रसिद्ध' दोष से दूषित है ॥१३॥

असम्मतं सोदाहरणमाह—

शक्तमप्यर्थमाख्यातुं यन्न सर्वत्र सम्मतम् ।
असम्मतं तमोम्भोजं चालयन्त्यंशवो रवेः ॥१४॥

अन्वय.—यत् अर्थम् आख्यातु शक्तमपि सर्वत्र न सम्मतम्, [तत्] असम्मतम् । [यथा] रवे अंशवः तमोम्भोजं चालयन्ति ।

पदार्थ—यत्-पदम्, अर्थं-कमिदभिधेयम्, आख्यातुम्-अभिधातुम्, शक्तमपि-समर्थमपि सर्वत्र-सकलकविसमाजेषु । न सम्मतं-नाभिमतम्, तद् असम्मतम्-इति नाम्ना कथ्यते। यथा—रवे-सूर्यस्य, अंशवः-किरणाः, तमोम्भोजम्-अन्धकारकर्दमम्, चालयन्ति-नाशयन्त्यपनयन्तीत्यर्थः । अत्र 'अम्भोज' पदम् अम्भसो जातोऽम्भोज इति व्युत्पत्त्या कर्दमकमलार्थयोः प्रतीयमानमपि कमलार्थ एव कविसम्मतम्, कर्दमे तत्प्रयोगः असम्मतदोष दुष्ट एवेति ॥१४॥

ग्राम्यं सोदाहरणमाह—

यद्यत्रानुचितं तद्धि तत्र ग्राम्यं स्मृतं यथा ।
छादयित्वा सुरान् पुष्पैः पुरो धान्यं क्षिपाम्यहम् ॥१५॥

अन्वय.—यत्र यद् अनुचित तत्र तद् हि ग्राम्यं स्मृतम् । यथा—अहं सुरान् पुष्पै· छादयित्वा पुर· धान्यं क्षिपामि ।

पदार्थ —यत्र–यस्मिन् देशे यस्या वा भाषायाम्, यत्–पदम्, अनुचितम्–प्रयोक्तुमयुक्तम्, तत्र–तस्मिन् देशे तस्या वा भाषायाम्, तद्धि–तदेव पदम्, ग्राम्यम्–अश्लील विद्वज्जनप्रयोगायोग्यम् स्मृतम्–अभिहितम् । यथा–अह सुरान्–देवान्, पुष्पै –कुसुमै, छादयित्वा–आच्छाद्य समभ्यर्च्य, पुर –अग्रत, देवानामभिमुखमित्यर्थ, धान्य–व्रीह्यादिकम्, क्षिपामि–निर्वपामि समर्पयामीत्यर्थ । अत्र 'छादयित्वा' 'धान्य' 'क्षिपामि' इति पदत्रय ग्रामीणजनप्रयुक्तपदत्वात् ग्राम्यम् । एव च व्रीडाजुगुप्साऽमङ्गलप्रतीतिकरायामपि पदाना समायां वक्तुमनुचितत्वाद् ग्राम्यत्वमेव । यथा 'साधन सुमहद्यस्य' 'वायु प्रसरति' 'सस्थितोऽयम्' इत्यादिषु ।

भावार्थ—जिस देश अथवा भाषा में, जिस पद का प्रयोग करना अनुचित हो, उसका प्रयोग कर देना ग्राम्य कहाता है । जैसे–'मैं देवताओं को फूलों से ढक कर उनके आगे चावल फेंकता हूँ' इस वाक्य में संस्कृत पद 'छादयित्वा' 'धान्य' 'क्षिपामि' ये गवार आदमियों से बोले गये पदों के समान होने के कारण ग्राम्य हैं ॥१५॥

सम्प्रति वाक्यमात्रगतान् दोषान् वक्तुमुपक्रमते—

पदात्मकत्वाद् वाक्यस्य तद्दोषाः सन्ति तत्र हि ।
अपदस्थास्तु ये वाक्यदोषास्तान् ब्रूमहेऽधुना ॥१६॥

अन्वयः—वाक्यस्य पदात्मकत्वात् तद्दोषा· तत्र सन्ति हि । ये तु अपदस्था वाक्यदोषाः तान् अधुना ब्रूमहे ।

पदार्थ —वाक्यस्य–पदसमुदायस्य, पदात्मकत्वात्–पदरूपत्वात्, तद्दोषा –पदगतदोषा पूर्वं निरूपिता अनर्थकादय, तत्र–वाक्ये, सन्ति हि–विद्यन्त एव । ये तु–ये पुन, अपदस्था·–पदे अविद्यमाना, केवल वाक्यदोषा –वाक्यगता एव दोषा, तान्–खण्डितादीन् वक्ष्यमाणानष्टौ दोषान्, अधुना–इदानीमनन्तरमेव, ब्रूमहे–कथयाम. ।

भावार्थ—वाक्य के पदसमुदाय रूप होने से, जो दोष पद में कहे गये हैं, वे तो वाक्य में होते ही हैं। किन्तु जो दोष पदों में नहीं होते, केवल वाक्य में ही होते हैं, उन का अब निरूपण करते हैं ॥१६॥

वाक्यदोषानुद्दिशति—

**खण्डितं व्यस्तसम्बन्धमसम्मितमपक्रमम् ।**
**छन्दोरीतियतिभ्रष्टं दुष्टं वाक्यमसत्क्रियम् ॥१७॥**

अन्वयः—खण्डितम्, व्यस्तसम्बन्धम्, असम्मितम्, अपक्रमम्, छन्दोरीतियतिभ्रष्टम्, असत्क्रियं वाक्यं दुष्टं [भवति]।

पदार्थ—खण्डित-वाक्यान्तरप्रवेशेन विच्छिन्नम्, व्यस्तसम्बन्ध-दूरस्थितसम्बन्धिपदम्, असम्मितम्-असमशब्दार्थम्, अपक्रम-प्रसिद्धक्रमरहितम्, छन्दोरीतियतिभ्रष्ट-छन्दोभ्रष्ट-छन्द शास्त्रविरुद्धम्, रीतिभ्रष्ट-गौडीयादिरीतिरहितम्, यतिभ्रष्ट-पदान्तराल एव विरामवत्, असत्क्रिय-क्रियापदरहितम्, वाक्य दुष्ट भवतीतिशेष । एतऽष्टौ दोषा केवल वाक्यगता भवन्तीत्यर्थ ।

भावार्थ—खण्डित, व्यस्तसम्बन्ध, असम्मित, अपक्रम, छन्दोभ्रष्ट, रीतिभ्रष्ट, यतिभ्रष्ट, क्रियाहीन होना—ये आठ वाक्यगत दोष कहे जाते हैं ॥१७॥

तत्र सोदाहरणं खण्डितमाह—

**वाक्यान्तरप्रवेशेन विच्छिन्नं खण्डितं मतम् ।**
**यथा पातु सदा स्वामी यमिन्द्रः स्तौति यो जिनः ॥१८॥**

अन्वय—वाक्यान्तरप्रवेशेन विच्छिन्नं खण्डितं मतम्। यथा—इन्द्रः यं स्तौति [स] स्वामी जिनः यः सदा पातु।

पदार्थ—अत्र 'यद् वाक्यम्' इत्यध्याहार्यम् । वाक्यान्तरप्रवेशेन-अन्यद् वाक्य वाक्यान्तर तस्य अन्यस्य वाक्यस्य प्रवेश-अभिनिवेश मध्येपातस्तेन, विच्छिन्न-भिन्नतां मत तद् वाक्य खण्डित-तदाख्यदोष दुष्टम्, मत-कथितम् । यथा—इन्द्र-देवराज, य-देव जिनम्, स्तौति-प्रशंसति, स प्रसिद्ध स्वामी-प्रभु, जिन-सर्वज्ञो बुद्ध, व-युष्मान्, सदा-सर्वदा, पातु-रक्षतु । अत्र मूलश्लोके 'पातु सदा स्वामी यो जिन' इति वाक्यम् अन्तराऽऽपतितेन 'यमिन्द्र स्तौति' इति वाक्यान्तरेण विच्छिन्नम्। तस्मादत्र वाक्ये खण्डितत्व दोष ।

भावार्थ—जो वाक्य, बीच में दूसरे वाक्य के आजाने से विच्छिन्न हो गया हो, वह खण्डित कहाता है। जैसे—वह प्रभु जिन, इन्द्र जिसकी स्तुति करता है, सदा तुम्हारी रक्षा करे' इस वाक्य में 'इन्द्र जिस की स्तुति करता है' यह वाक्य बीच में आजाने से, प्रथम वाक्य विच्छिन्न हो गया है, इसलिये यह खण्डित है ॥१८॥

व्यस्तसम्बन्धं सोदाहरणमाह—

सम्बन्धिपददूरत्वे व्यस्तसम्बन्धमुच्यते ।
यथाऽऽद्यः सम्पदं ज्ञाता देयात् तत्त्वानि वोऽर्हताम् ॥१९॥

अन्वयः—सम्बन्धिपददूरत्वे व्यस्तसम्बन्धम् उच्यते । यथा—तत्त्वानि ज्ञाता अर्हताम् आद्यः वः सम्पदं देयात् ।

पदार्थ.—सम्बन्धिपददूरत्वे–सम्बन्धिनां सम्बन्धवतां पदानां दूरत्वे–असन्निधाने सति दुष्टं वाक्यम्, व्यस्तसम्बन्धम्–एतन्नाम्ना, उच्यते–अभिधीयते । यथा—तत्त्वानि–पृथिव्यादीनि, ज्ञाता–अवगन्ता, अत्र 'न लोकाव्यय–' इति [पा० २।३।६९] षष्ठीप्रतिषेधेन कर्मणि द्वितीया भवति । सकलपदार्थयथार्थज्ञानशील इत्यर्थः । अर्हतां–जिनसम्प्रदायविशेषावलम्बिनाम्, आद्यः–प्रथमः, ऋषभदेव इत्यर्थः, वः–युष्माकम्, सम्पदं–धनाद्यैश्वर्यम्, देयात्–प्रदद्यात् । अत्र 'आद्यः' इत्यस्य 'अर्हताम्' इत्यनेन अतिदूरस्थितेन सम्बन्धः । एवं च 'तत्त्वानि ज्ञाता' इत्येतयोरपि मिथः सम्बन्धः मध्ये 'देयात्' पदस्य स्थितत्वात् दूरस्थित एव । तथा चेदं वाक्यं व्यस्तसम्बन्धम् ।

भावार्थ—सम्बन्धी पदों के दूरस्थित होने पर व्यस्तसम्बन्ध दोष कहा जाता है। जैसे—'तत्त्वज्ञाता अर्हतों में श्रेष्ठ, तुम्हें सम्पत्ति प्रदान करें' इस वाक्य में 'तत्त्वों का ज्ञाता' और 'अर्हतों में श्रेष्ठ' ये सम्बन्धी पद मूलश्लोक में बहुत दूर दूर पड़े हुए हैं ॥१९॥

असम्मितं लक्षयति—

शब्दार्थौ यत्र न तुलाविधृताविव सम्मितौ ।
तदसम्मितमित्याहुर्वाक्यं वाक्यविदो यथा ॥२०॥

अन्वयः—यत्र शब्दार्थौ तुलाविधृतौ इव न सम्मितौ तद् वाक्यं वाक्यविदः असम्मितम् इत्याहुः । यथा—

पदार्थ —यत्र-यस्मिन् वाक्ये, शब्दार्थौ-शब्दश्चार्थश्च तौ, पदतदर्थौ, तुलाविधृतौ-तुलया तुलादण्डेन विधृतौ न्यस्तौ द्वौ भारौ इव, व्यतिरेक्युदाहरणमिदम्, यथा तुलाधृत वस्तुद्वय समगुरुत्व भवति तथा यौ शब्दार्थौ न सम्मितौ-न तुल्यौ, शब्दा बहवोऽर्थश्चाल्प, तद् वाक्यं-तथाविध पदसमूहम्, वाक्यविद-बुधा, असम्मितमिति-एतदाख्य दोषम्, आहु-कथयन्ति। यथा-इत्यस्मिोदाहरणश्लोकेन सम्बध्यते।

भावार्थ—जिस वाक्य में, शब्द और अर्थ, तराजू पर धरे हुए दो तुल्य पदार्थों की तरह, समान नहीं होते, वह वाक्य असम्मित कहलाता है। अर्थात् जिस में शब्द बहुत अधिक हों और अर्थ बहुत थोड़ा हो। जैसे—॥२०॥

**असम्मितोदाहरणमाह—**

> मानसौकःपतद्यानदेवासनविलोचनः।
> तमोरिपुविपक्षारिप्रियां दिशतु वो जिनः॥२१॥

अन्वयः—मानसौकःपतद्यानदेवासनविलोचनः जिनः वः तमोरिपुविपक्षारिप्रियां दिशतु।

पदार्थ —मानसौकःपतद्यानदेवासनविलोचन,-मानस नाम सर तदेव ओक -स्थानं यस्य स चासौ पतन्-पक्षी हंस इत्यर्थः। स एव यान-वाहन यस्य तथाभूत यो देव -ब्रह्मा तस्य आसन-कमलम्, तदिव विलोचने-नेत्रे यस्य एवंभूत, कमलनेत्र इत्यर्थ, जिन -बुद्ध, व -युष्माकम्, तमोरिपुविपक्षारिप्रिया-तमसाम्-अन्धकाराणां रिपु -शत्रु निवर्तकत्वेन, सूर्य, तस्य विपक्ष -अरि, राहुरित्यर्थ, तस्य अरि शत्रुर्विष्णु तस्य प्रियां-लक्ष्मीम्, दिशतु-वितरतु। अत्र शब्दानां बाहुल्येऽपि 'कमलनेत्रो बुद्धो युष्मभ्यं लक्ष्मीं ददातु' इत्ययमर्थस्तु स्वल्प एव। तस्मादत्राऽसम्मितत्वं दोष।

भावार्थ—मानस सरोवर में रहने वाला पक्षी हंस जिसका वाहन है, उस ब्रह्मा का आसन जो कमल, उसके समान नेत्र वाला, जिन देव, अन्धकार को नष्ट करने वाले सूर्य का विपक्षी जो राहु, उसके शत्रु विष्णु की प्रिया लक्ष्मी को आप लोगों के लिये देवे। यहां पर बड़े लम्बे लम्बे समस्त पदों का अर्थ बहुत थोड़ा होने से असम्मित दोष है॥२१॥

सोदाहरणमपक्रममाह—

**अपक्रमं भवेद् यत्र प्रसिद्धक्रमलङ्घनम् ।**
**यथा भुक्त्वा कृतस्नानो गुरून् देवांश्च वन्दते ॥२२॥**

अन्वयः—यत्र प्रसिद्धक्रमलङ्घनम् [तत्] अपक्रमं भवेत् । यथा—भुक्त्वा कृतस्नानः गुरून् देवांश्च वन्दते ।

पदार्थ —यत्र-यस्मिन् वाक्ये, प्रसिद्धक्रमलङ्घनं-प्रसिद्धस्य लोके शास्त्रे वा प्रख्यातस्य, क्रमस्य-नियमस्य, लङ्घनम्-अतिक्रम , तद्वाक्यम् अपक्रम-तदाख्यदोषयुक्तम्, भवेत्-स्यात् । यथा—भुक्त्वा-भोजन कृत्वा, कृतस्नान -कृत स्नानं येन स स्नात सन्, गुरून्-आचार्यान्, देवान्-अमरांश्च, वन्दते-प्रणमति । अत्र पूर्वं स्नानं ततो देवगुरुवन्दन ततश्च भोजनम्, इति लोक-शास्त्रप्रसिद्धस्य क्रमस्य लङ्घनात् अपक्रमत्व दोष ।

भावार्थ—जिस वाक्य में लोक-प्रसिद्ध तथा शास्त्र प्रसिद्ध क्रम का उल्लंघन हो, वह अपक्रम कहाता है । जैसे—'वह खाना खाकर, स्नान करके गुरु तथा देवता को नमस्कार करता है' । यहां प्रसिद्धि के अनुसार स्नान सबसे पूर्व और भोजन सबके अन्त में होना चाहिए ॥२२॥

सोदाहरणं छन्दोभ्रष्टमाह—

**छन्दःशास्त्रविरुद्धं यत् छन्दोभ्रष्टं हि तद्यथा ।**
**स जयतु जिनपतिः परब्रह्ममहानिधिः ॥२३॥**

अन्वयः—यत् छन्द-शास्त्रविरुद्धं तत् हि छन्दोभ्रष्टम् । यथा—सः परब्रह्ममहानिधि जिनपतिः जयतु ।

पदार्थ —यत-वाक्यम्, छन्द शास्त्रविरुद्ध-पिङ्गलादिप्रदर्शितपदरचना-नियमप्रतिकूलम्, तत् हि-तदेव वाक्यम्, छन्दोभ्रष्ट-तदाख्यदोषयुक्त कथ्यत इति शेष । यथा—स -प्रसिद्ध परब्रह्ममहानिधि -परब्रह्मणः परमतत्त्वस्य महानिधि -उत्कृष्ट शेवधि, महान् आश्रय इत्यर्थ , जिनपति -भगवान् बुद्धदेव ,जयतु-सर्वोत्कर्षेण वर्तताम् । अत्र तृतीयचरणे 'स जयति जिनपति ' इत्यत्र आद्यपादात् परं नगणस्य पातात् अनुष्टुप्लक्षणं नास्ति । तस्मात् छन्दोभ्रष्टत्वमत्र दोष ।

भावार्थ—जो वाक्य छन्द शास्त्र के प्रतिकूल रचना किया गया हो, वह छन्दोभ्रष्ट कहलाता है। जैसे—'परमतत्त्व का खजाना जिनपति विजयी हो' इस मूल वाक्य के तीसरे चरण में छन्दोरचना ठीक न होने से छन्दोभ्रष्ट दोष है॥२३॥

**सोदाहरणं रीतिभ्रष्टं निरूपयति—**

रीतिभ्रष्टमनिर्वाहो यत्र रीतेर्भवेद् यथा।
जिनो जयति स श्रीमान् इन्द्राद्यमरवन्दितः ॥२४॥

अन्वयः—यत्र रीतेः अनिर्वाहः भवेत्, [तत्] रीतिभ्रष्टम्। यथा—स इन्द्राद्यमरवन्दितः श्रीमान् जिनः जयति।

पदार्थ—यत्र–यस्मिन् वाक्ये, रीतेः–वैदर्भ्यादेः, अनिर्वाहः–अननुसरणम्, भवेत्–स्यात्, तद्वाक्यम्, रीतिभ्रष्टं–तदाख्यदोषयुक्तं कथ्यत इति शेषः। यथा—स–प्रसिद्धः, इन्द्राद्यमरवन्दितः–इन्द्रो देवराज आदिः प्रथमः श्रेष्ठो वा येषां ते इन्द्राद्याः, ते च ते अमराः–देवास्तैर्वन्दितः–पूजितः, सुरेन्द्रादिदेवसत्कृत इत्यर्थः, श्रीमान्–लक्ष्मीयुक्तः, जिनः–बुद्धदेवः, जयति–सर्वोत्कर्षेण वर्तते। अत्र तृतीयचरणे असमस्तपदप्रयोगात् वैदर्भी रीतिः, तुरीयचरणे पुनः समासाश्रयणात् गौडीया रीतिः। एकस्मिन्नेव श्लोके रीतिद्वयाश्रयणेन प्रारब्धरीतेरनिर्वाहादत्र रीतिभ्रष्टता दोषः।

भावार्थ—जिस वाक्य में प्रथम स्वीकृत रीति का निर्वाह न हो, वह रीतिभ्रष्ट कहलाता है। जैसे—'इन्द्र आदि देवों से सत्कृत, शोभायुक्त भगवान् बुद्ध सबसे उत्कृष्ट है।' इस वाक्य के तृतीय और चतुर्थ चरण में दो भिन्न रीतियों का आश्रय लिया गया है, इसलिए यहाँ रीतिभ्रष्ट नामक दोष है॥२४॥

**सोदाहरणं यतिभ्रष्टमाह—**

पदान्तर्विरतिः प्रोक्तं यतिभ्रष्टमिदं यथा।
नमस्तस्मै जिनस्वामिने सदा नेमयेऽर्हते ॥२५॥

अन्वयः—पदान्तर्विरतिः इदं यतिभ्रष्टं प्रोक्तम्। यथा—तस्मै जिनस्वामिने अर्हते नेमये सदा नमः।

पदार्थ—पदान्तर्विरतिः–पदस्य–सुप्तिङन्तस्य शब्दस्य, अन्तः–मध्ये या विरतिः–विरामः, इदम्–एवंभूतं वाक्यम्, यतिभ्रष्टं–तदाख्यदोषयुक्तम्, प्रोक्तम्–कथितम्, बुधैरिति शेषः। यथा—तस्मै–प्रसिद्धाय, जिनस्वामिने–जिनो बुद्ध

चामी स्वामी–परमैश्वर्यवान्, तस्मै ऐश्वर्यशालिने बुद्धायेत्यर्थः । अर्हते–सर्वपूज्याय, नेमये–तन्नाम्ने महापुरुषाय, सदा–सर्वदा, नमः–प्रणतिः । अत्र 'जिनस्वामिने' इति पदस्य मध्ये 'जिनस्वामि' इत्यत्र यतिः, 'ने' इत्यक्षरं चतुर्थचरणे पठ्यते । एवं चात्र पदस्य मध्ये यतिसत्त्वात् यतिभ्रष्टत्वं दोषः ।

भावार्थ—जिस वाक्य के पद के बीच में ही विराम हो जाय, वहां यति-भ्रष्ट दोष होता है। जैसे—'नेमि नाम वाले पूज्य एवं ऐश्वर्यशाली बुद्ध के लिये नमस्कार हो' इस वाक्य में 'जिनस्वामिने' पद के बीच में ही यति होने से यतिभ्रष्ट दोष है ॥२५॥

सोदाहरणमसत्क्रियमाह—

क्रियापदविहीनं यत् तदसत्क्रियमुच्यते ।
यथा सरस्वतीं पुष्पैः श्रीखण्डैर्घुसृणैः स्तवैः ॥२६॥

अन्वयः—यत् क्रियापदविहीनं तत् असत्क्रियम् उच्यते । यथा—सरस्वतीं पुष्पैः श्रीखण्डैः घुसृणैः स्तवैः ।

पदार्थ—यत्–वाक्यम्, क्रियापदविहीन–क्रियापदेन रहितम्, तद्वाक्यम्, असत्क्रियं–तदाख्यदोषदुष्टम्, उच्यते कथ्यते । यथा—सरस्वतीं–वाग्देवीम्, पुष्पैः–कुसुमैः, श्रीखण्डैः–चन्दनैः, घुसृणैः–कुङ्कुमैः, स्तवैः–स्तोत्रैश्च । अत्र सरस्वतीं पुष्पैः अर्चयामि, चन्दनैः कुङ्कुमैश्च अनुलिम्पामि, स्तवैश्च स्तौमि—इति स्यात् । एवं च मूलवाक्ये क्रियापदासत्त्वात् असत्क्रियत्वमत्र दोषः ।

भावार्थ—जो वाक्य क्रियापद से रहित हो, वह असत्क्रिय कहाता है । जैसे—'सरस्वती देवी को पुष्प, चन्दन, केसर तथा स्तुतियों से' इस वाक्य में क्रियापद कोई नहीं है, इसलिये यह वाक्य असत्क्रिय दोष से युक्त है । वस्तुतः यहां 'सरस्वती देवी की पुष्प आदि से अर्चना करता हूं' ऐसा वाक्य होना चाहिये ॥२६॥

अथ वाक्यदोषानुक्त्वा सम्प्रत्यर्थदोषानाह—

देशकालागमावस्थाद्रव्यादिषु विरोधिनम् ।
काव्येऽप्यर्थं न बध्नीयात् विशिष्टं कारणं विना ॥२७॥

अन्वयः—देशकालागमावस्थाद्रव्यादिषु विरोधिनम् अर्थं

पदार्थ —देशकालागमावस्थाद्रव्यादिषु–देश स्थानविशेषो ग्रामनगर पर्वतादि, काल समयो वसन्तादि, आगम शास्त्रम्, अवस्था दशा, द्रव्य पृथिव्यादि, आदिपदेन गुणक्रियादीना सग्रह, तेषु विषयेषु, विरोधिन–प्रतिकूलतया भासमान विपरीतम्, अर्थम्–अभिधेयम्, विशिष्टम्–असाधारणम्, कारण–हेतुम्, विना–अन्तरेण, काव्येषु–गद्यपद्यात्मकरचनासु, न बध्नीयात्–न योजयेत् न वर्णयेदित्यर्थ, तथा वर्णन कवेरव्युत्पन्नत्वद्योतकत्वादुपहासकरमेवेत्यर्थ ।

भावार्थ—देश, काल, शास्त्र, अवस्था तथा द्रव्यादि विषयक विरोधी अर्थ को, विशेष कारण के बिना, कभी काव्य में वर्णन न करे॥२७॥

देशादिविरोधेन निबद्धस्यार्थस्य दुष्टत्वमुदाहरति—

प्रवेशे चैत्रस्य स्फुटकुटजराजीस्मितदिशि
प्रचण्डे मार्तण्डे हिमकणसमानोष्ममहसि ।
जलक्रीडायातं मरुसरसि बालद्विपकुलं
मदेनान्धं विध्यन्त्यसमशरपातैः प्रशमिनः ॥२८॥

अन्वयः—स्फुटकुटजराजीस्मितदिशि चैत्रस्य प्रवेशे, हिमकणसमानोष्ममहसि मार्तण्डे प्रचण्डे [सति], प्रशमिनः मरुसरसि जलक्रीडायातं मदेनान्ध बालद्विपकुलम् असमशरपातैः विध्यन्ति।

पदार्थ —स्फुटकुटजराजीस्मितदिशि–स्फुटा विकसितकुसुमा या कुटजानां गिरिमल्लिकानां ['कुटज शक्रो वत्सको गिरिमल्लिका' इत्यमर ] राजय श्रेणय, ता एव स्मितम् ईषद्धासो यासां तथाभूता दिश आशा यत्र एवभूते, चैत्रस्य–मधुमासस्य, प्रवेशे–प्रारम्भे, हिमकणसमानोष्ममहसि—हिमानां तुहिनानां ये कणा बिन्दव, तै समानानि तुल्यानि ऊष्ममहांसि उष्णतेजांसि यस्य एवभूते, यथा तुषारपात तथैव ग्रीष्मातप इत्युभयो साम्यम् । मार्तण्डे-सूर्ये, प्रचण्डे–अतितरां तीव्रे सति, प्रशमिन –शान्तस्वभावा योगिन, मरुसरसि–मरु निर्जल प्रदेश, तत्र यत् सर जलाशयस्तस्मिन्, मरुभूमिगते जलाशय इत्यर्थ, जलक्रीडायातं–जलक्रीडायै वारिखेलायै आयातमागतम्, मदेनान्ध–मदोन्मत्तान्धं गर्वमेवावमानतम्,

बालद्विपकुल—करिशावकसमूहं कलभसमुदायमित्यर्थः, असमशरपातैः—विषमबाणप्रहारैः, विध्यन्ति—भिन्दन्ति।

अत्र चैत्रारम्भे कुटजपुष्पविकासः कालविरुद्धः, तस्य वर्षास्वेव सम्भवात्। मार्तण्डस्य हिमकणवद् उष्णताभिधानं द्रव्यविरुद्धम्। मरुदेशे जलाशयवर्णनं देशविरुद्धम्। कलभानां मदोन्मत्ततामिधानम् अवस्थाविरुद्धम्, यौवन एव मदसम्भवात्। प्रशमिनो विध्यन्तीत्यागमविरुद्धम्। वनद्विपानामपि वेधनं शास्त्रविरुद्धम्। एवं देशकालादिविरुद्धवर्णनं कवेर्हास्यायैव न यशसे इति भावः।

भावार्थ—खिले हुए कुटज के फूलों से मुस्कराती हुई दिशाओं वाले चैत्र मास के प्रारम्भ में, तथा तुषारपात के समान गरमी बरसाते हुए सूर्य के अति प्रचण्ड होने पर, मरुभूमि के तालाब में जल-क्रीडा के लिये आये हुए मदान्ध हाथी के बच्चों को शान्तस्वभाव योगिजन तीव्र बाणों से बींध रहे हैं। यहां पर वसन्त में कुटज का फूलना काल विरुद्ध, सूर्य का तुषारपात के समान गरमी बरसाना द्रव्य विरुद्ध, मरुभूमि में जलाशय का वर्णन देशविरुद्ध, हाथी के बच्चों को मदोन्मत्त कहना अवस्था विरुद्ध, तथा योगियों का बाण चला कर हाथी मारना शास्त्र विरुद्ध है ॥२८॥

**प्रकरणमुपसंहरति—**

**इति दोषविपनिषेकैरकलङ्कितमुज्ज्वलं सदा विबुधैः ।**
**कविहृदयसागरोत्थितममृतमिवास्वाद्यते काव्यम् ॥२९॥**

**अन्वय—इति दोषविषनिषेकैः अकलङ्कितम् उज्ज्वलं कविहृदयसागरोत्थितं काव्यम् अमृतमिव विबुधैः सदा आस्वाद्यते।**

पदार्थ—इति—इत्थम्, दोषविषनिषेकैः—पूर्वोक्ता ये दोषाः—अनर्थकत्वादयः, त एव विषाणि हालाहलानि, तेषां निषेकाः—मिश्रीभावाः—सम्मिश्रणानि तैः, अकलङ्कितम्—अदूषितम्, उज्ज्वलम्—अनर्थकत्वादिदोषशून्यतया गुणालङ्कारयुक्ततया च विशेषचमत्कृतिसहितम्, कविहृदयसागरोत्थितं—कवीनां हृदयान्येव सागरः समुद्रः, तस्मादुत्थितं प्रादुर्भूतम्, काव्य—कवित्वम्, अमृतमिव—पीयूषवत्, विबुधैः—विद्वद्भिः देवैश्च, सदा—सर्वदा, आस्वाद्यते—सानन्दं पर्यालोच्यते निपीयते चेत्यर्थः।

भावार्थ—इस प्रकार पूर्वोक्त अनर्थक आदि विषरूप दोषों के सम्मिश्रण से रहित, तथा गुण अलंकार आदि से युक्त, कवियों के हृदय रूपी सागर से प्रादुर्भूत हुए काव्य का, अमृत के समान, विद्वान् और देव सदा ही आस्वादन करते हैं ॥२६॥

इति वाग्भटालङ्कारव्याख्यायां बालबोधिन्यां
द्वितीयः परिच्छेदः ।

# तृतीयः परिच्छेदः ।

आदौ गुणप्रयोजनमाह—

अदोषावपि शब्दार्थौ प्रशस्येते न यैर्विना ।
तानिदानीं यथाशक्ति ब्रूमोऽभिव्यक्तये गुणान् ॥१॥

अन्वयः—अदोषौ अपि शब्दार्थौ यैर्विना न प्रशस्येते इदानीं तान् गुणान् यथाशक्ति अभिव्यक्तये ब्रूमः ।

पदार्थ.—अदोषौ—अनर्थकत्वादिदोषरहितौ अपि, शब्दार्थौ—शब्दश्चार्थश्च तौ पदपदार्थौ, यैः—गुणैः, विना न प्रशस्येते—प्रशंसां नार्हतः, तान् काव्यप्रशंसाहेतुभूतान् वक्ष्यमाणान्, गुणान्—औदार्यादीन्, यथाशक्ति—शक्तिमनतिक्रम्य, सामर्थ्यानुसारम्, अभिव्यक्तये—प्रकटीकर्तुम्, ब्रूमः—प्रतिपादयामः ।

भावार्थ—अनर्थक आदि दोषों से रहित भी शब्द और अर्थ, जिन गुणों के बिना प्रशंसा के योग्य नहीं होते, अब उन गुणों को यथाशक्ति प्रकट करने के लिये अग्रिम ग्रन्थ का प्रारम्भ किया जाता है ॥१॥

गुणानुद्दिशति—

औदार्यं समता कान्तिरर्थव्यक्तिः प्रसन्नता ।
समाधिः श्लेष ओजोऽथ माधुर्यं सुकुमारता ॥२॥

अन्वयः—औदार्यम्, समता, कान्तिः, अर्थव्यक्तिः, प्रसन्नता, समाधिः, श्लेषः, ओजः, माधुर्यम्, अथ सुकुमारता ।

पदार्थ —औदार्यम्—उदारता, समता—समानत्वम्, कान्तिः—शोभा, अर्थव्यक्तिः—अभिधेयस्य स्पष्टतया प्रतीतिः, प्रसन्नता—प्रसादः, समाधिः—समाधानम्, श्लेषः—अनेकार्थप्रत्यायकत्वम्, ओजः—समासबहुलतया बन्धसौन्दर्यम्, माधुर्यम्—मधुरता, अथ सुकुमारता—सुकोमलपदविन्यासश्च, एते दश गुणाः शास्त्रविद्भिरुद्दिष्टा इति शेषः ।

भावार्थ—औदार्य समता कान्ति अर्थव्यक्ति प्रसन्नता समाधि श्लेष ओज माधुर्य और सुकुमारता ये दश गुण समझने चाहिये ॥२॥

क्रमप्राप्तमौदार्यं लक्षयति—

पदानामर्थचारुत्वप्रत्यायकपदान्तरैः ।
मिलितानां यदाधानं तदौदार्यं स्मृतं यथा ॥३॥

अन्वय.—अर्थचारुत्वप्रत्यायकपदान्तरैःमिलितानां पदानां यद् आधानं तद् औदार्यं स्मृतम् । यथा—

पदार्थ —अर्थचारुत्वप्रत्यायकपदान्तरै –अर्थस्य–अभिधेयस्य यत् चारुत्व–मनोज्ञत्वम् , तस्य प्रत्यायकानि–बोधकानि, यानि पदान्तराणि–भिन्नानि पदानि, तै सह मिलितानां–सगतानाम्, पदानां–सुप्तिङन्तशब्दानाम् , यद् आधान–करण विरचन वा, प्रयोग इति भाव , तद् औदार्यम्–उदारता तदाख्यो गुण इत्यर्थ , स्मृत–प्रतिपादितम , बुधैरिति शेष । यथा इति पदम् उदाहरण-प्रदर्शकेनाग्रिमश्लोकेन सम्बध्यते ।

भावार्थ—अर्थ की सुन्दरता का बोधन कराने वाले अन्य पदों के साथ मिले हुए पदों की योजना औदार्य कहाता है । जैसे—॥३॥

औदार्यस्योदाहरणमाह—

गन्धेभविभ्राजितधाम लक्ष्मी-
लीलाम्बुजच्छत्रमपास्य राज्यम् ।
क्रीडागिरौ रैवतके तपांसि
श्रीनेमिनाथोऽत्र चिरं चकार ॥४॥

अन्वयः—श्रीनेमिनाथः गन्धेभविभ्राजितधाम लक्ष्मीलीलाम्बुजच्छत्रं राज्यम् अपास्य अत्र रैवतके क्रीडागिरौ चिरं तपांसि चकार ।

पदार्थ —श्रीनेमिनाथ –श्रिया लक्ष्म्या युक्तो नेमिनाथो नेमिस्वामी, गन्धेभविभ्राजितधाम–गन्धा प्रस्फुटमदगन्धयुक्ता , ये इभा –हस्तिन , ते गन्धेभा , गन्धगजा इत्यर्थ , तै विभ्राजितानि–विशेषेण शोभितानि, धामानि–स्थानानि भवनानि वा यत्र तथाभूतम् मदमेदुरगजघटाशोभितराजद्वारमित्यर्थ । लक्ष्मीलीलाम्बुजच्छत्र–लक्ष्म्या राजश्रिया , लीलाम्बुजमिव क्रीडाकमलमिव छत्रम् आतपत्र यत्र तथाभूतम्, राज्यम्–प्रभुत्वम् , अपास्य–परित्यज्य,

अत्र—अस्मिन्, रैवतके—रैवतकनाम्नि, क्रीडागिरौ—विहारसुभगे पर्वते, चिरं—दीर्घकालम्, तपांसि—कठोरव्रतानि, चचार—अनुष्ठितवान् । अत्र इभाम्बुजगिरिशब्दानां गन्धलीलाक्रीडापदैर्मिलितानां सतामर्थरम्यत्वोत्पादकत्वादौदार्यम् । इभादीनां केवलानां न तादृशं सौन्दर्यं यथा गन्धादिभिर्मिलितानाम्, तदेवौदार्यमुच्यत इत्यर्थः ।

भावार्थ—श्रीनेमिनाथ ने, मद छोड़ने वाले हाथियों से सुशोभित राजमहलों से युक्त, तथा राज्य-लक्ष्मी के क्रीडा-कमल के समान छत्र वाले राज्य का परित्याग कर, यहां रैवतक नामक सुन्दर पहाड़ पर चिरकाल तक तप किया । यहां हाथी, कमल और पर्वत पदों के साथ गन्ध, लीला और क्रीडा पदों का मेल होने से अर्थ सौन्दर्य बढ़ जाने के कारण औदार्य गुण है ॥४॥

समतां कान्तिञ्च लक्षयति—

> बन्धस्य यदवैषम्यं समता सोच्यते बुधैः ।
> यदुज्ज्वलत्वं तस्यैव सा कान्तिरुदिता यथा ॥५॥

अन्वयः—बन्धस्य यत् अवैषम्यम्, बुधैः सा समता उच्यते । तस्यैव यत् उज्ज्वलत्वं सा कान्तिः उदिता । यथा—

पदार्थ—बन्धस्य—काव्यरचनस्य, यद् अवैषम्यं—मिथोऽप्रातिकूल्यम्, अविसंवादित्वमित्यर्थः, बुधैः—विद्वद्भिः, सा समता—तदाख्यो गुणः, उच्यते—कथ्यते । तस्यैव—बन्धस्यैव च, यद् उज्ज्वलत्वं—निर्मलत्वं माधुर्यव्यञ्जकविसर्गादिसत्त्वेन बन्धस्य यदुद्दीप्तत्वम्, सा कान्तिः—तदाख्यो गुणः, उदिता—कथिता, आलङ्कारिकैरिति शेषः । यथा इत्यग्रिमोदाहरणश्लोकेन सम्बध्यते ।

भावार्थ—रचना की परस्पर अनुकूलता को, विद्वान्, समता नामक गुण कहते हैं । और उस ही रचना की उज्ज्वलता को कान्ति नामक गुण कहा गया है । जैसे—॥५॥

समतामुदाहरति—

> कुचकलसविसारिस्फारलावण्यधारा-
> मनुवदति यदङ्गासङ्गिनी हारवल्ली ।
> असदृशमहिमानं तामनन्योपमेयां
> कथय कथमहं ते चेतसि व्यञ्जयामि ॥६॥

**अन्वयः**—यदङ्गासङ्गिनी हारवल्ली कुचकलसविसारिस्फारलावण्यधाराम् अनुवदति, असदृशमहिमानम् अनन्योपमेयां ताम्, ते चेतसि अहं कथं व्यञ्जयामि, कथय।

पदार्थ—यदङ्गासङ्गिनी–यस्याः कान्तायाः, अङ्गासङ्गिनी देहावयवसम्पर्किणी, हारवल्ली–हारलता, कुचकलसविसारिस्फारलावण्यधाराम् कुचकलसयोः स्तनकुम्भयोरुपरि विसारिणी प्रसरन्ती या स्फारा अत्युज्ज्वला उत्कटा वा लावण्यधारा सौन्दर्यपरम्परा ताम्, अनुवदति–अनुकरोति, असदृशमहिमान–नास्ति सदृशोऽन्यत्तुल्यो महिमा महत्त्वं यस्यास्ताम् अनुपममहत्त्वशालिनीम्, अत एव अनन्योपमेया–नास्ति अन्यद् उपमेयम् उपमायोग्यं यस्यास्ताम्, अन्याभिः कान्ताभिरुपमातुमशक्याम् अनन्यसदृशीमित्यर्थः। तां–कान्ताम्, ते–तव, चेतसि–हृदये, अहं कथं–केन प्रकारेण, व्यञ्जयामि–प्रकटीकरोमि प्रकाशयामि चेति कथय–ब्रूहि। अनुपमं तस्याः सौन्दर्यं शब्दैर्निरूपयितुमहं सर्वथाप्यशक्त इति भावः। काञ्चिन्नायिकामवेक्षितवतः कस्यचिन्निजसुहृदं प्रतीयमुक्तिः। अत्र सर्वचरणेषु रचनायास्तुल्यमाधुर्यप्रतीतेः समता नाम गुणः।

भावार्थ—जिसके अंगों पर लिपटी हुई हार लता, स्तनरूप कलसों पर बिखरी हुई अति उज्ज्वल सौन्दर्य परम्परा को स्पष्ट कर रही है। उस अनुपम महत्त्वशालिनी अद्वितीय कान्ता को, मैं तुम्हारे चित्त में किस तरह प्रकट करूँ, तुम्हीं कहो॥६॥

कान्तिमुदाहरति—

फलैः क्लृप्ताहारः प्रथममपि निर्गत्य सदना-
दनासक्तः सौख्ये क्वचिदपि पुरा जन्मनि कृती।
तपस्यन्नश्रान्तं ननु वनभुवि श्रीफलदलै-
रखण्डैः खण्डेन्दोश्चिरमकृत पादार्चनमसौ॥७॥

**अन्वयः**—कृती असौ पुराजन्मनि प्रथमम् अपि सदनात् निर्गत्य फलैः क्लृप्ताहारः क्वचिद् अपि सौख्ये अनासक्तः, अश्रान्तं तपस्यन् ननु वनभुवि अखण्डैः श्रीफलदलैः चिरं खण्डेन्दोः पादार्चनम् अकृत।

पदार्थः—कृती–कृतार्थः सफलः, असौ–कश्चिदनिर्दिष्टनामा पुमान्, पुराजन्मनि–पूर्वस्मिन् देहग्रहे, प्रथमं–बाल्ये, अपि–एव, सदनात्–गृहात्, निर्गत्य बहिर्भूय, गार्हस्थ्यधर्मं परित्यज्येत्यर्थः, फलैः–वन्यैस्तैः, कल्पिताहारः–सम्पादितभोजनः, क्वचिदपि–कस्मिंश्चिदपि, सौख्ये–इन्द्रियादिजन्ये भोगसुखे, अनासक्तः–आसक्तिरहितः, अश्रान्तं–श्रमराहित्येन निरन्तरं यथा स्यात् तथा, तपस्यन्–तपश्चर्यां कुर्वन्, ननु–निश्चितं निःसन्देहं वा यथा स्यात् तथा, वनभुवि–अरण्यप्रदेशे, अखण्डैः–अत्रुटितैः, श्रीफलदलैः–बिल्वपत्रैः, चिरं–दीर्घकालं यावत्, खण्डेन्दोः–खण्डः कलात्मकः अर्धो वा इन्दुश्चन्द्रो मस्तके यस्य सः, तस्य महादेवस्य, पादार्चनं–चरणपूजनम्, अकृत–कृतवान् । अत्र न विरूपः सन्धिः, न विसर्गाणां लोपः, न च समासानां दीर्घता, इति बन्धस्य उज्ज्वलत्वात् कान्तिर्गुणः ।

भावार्थ—अपने प्रयत्न में सफल उस व्यक्ति ने, पूर्वजन्म में बालकपन से ही घर छोड़कर, फलों से जीवन निर्वाह कर, किसी भी वैषयिक सुख में न फँसकर, निरन्तर तपस्या करते हुए जंगल में बिना टूटे फूटे बेल के पत्तों से चिरकाल तक महादेव के चरणों की पूजा की ॥७॥

सोदाहरणामर्थव्यक्तिमाह—

यदनेयत्वमर्थस्य सार्थव्यक्तिः स्मृता यथा ।
त्वत्सैन्यरजसा सूर्ये लुप्ते रात्रिरभूद् दिवा ॥८॥

अन्वयः—अर्थस्य यद् अनेयत्वं सा अर्थव्यक्तिः स्मृता । यथा—त्वत्सैन्यरजसा सूर्ये लुप्ते दिवा रात्रिः अभूत् ।

पदार्थ—अर्थस्य–पदप्रतिपाद्यस्य अभिधेयस्य यद् अनेयत्वं–सुलभोपलब्धत्वम्, अध्याहारादिकष्टकल्पना विना उच्चारितपदैरेव अभिमतार्थोपस्थितिरित्यर्थः । सा अर्थव्यक्तिः–तदाख्यो गुणः, स्मृता–कथिता, बुधैरिति शेषः । यथा—त्वत्सैन्यरजसा–तव चमूनां चरणोत्थितेन रेणुना, सूर्ये–आदित्ये, लुप्ते–अन्तर्हिते सति, दिवा–दिवस एव, रात्रिः–निशा, सूर्यप्रकाशाभावात्, अभूत्–अजायत । अत्र रात्रेर्हेतुः सूर्यलोपः, तस्य हेतू रजः, तस्यापि तव सैन्यमित्यर्थस्य सुगमत्वेन शब्दतुल्यत्वम्, तस्मादत्र अर्थव्यक्तिर्गुणः ।

भावार्थ—अध्याहार आदि के बिना ही जिन उच्चारित पदों का अर्थ

सरलता से समझा जा सके, वहा अर्थव्यक्ति नामक गुण कहा गया है। जैसे—'आपकी सेनाओं के समूह से उठी हुई धूल के द्वारा सूर्य के ढके जाने पर दिन में ही रात हो गई'। यहा सूर्य का ढका जाना रात्रि का हेतु, धूल का उठना सूर्य के ढके जाने का हेतु और तुम्हारी सेना का चलना धूल उठने का हेतु सुख गम्य होने से अर्थव्यक्ति गुण विद्यमान है ॥८॥

सोदाहरणां प्रसन्नतामाह—

झटित्यर्थार्पकत्वं यत् प्रसत्तिः सोच्यते यथा ।
कल्पद्रुम इवाभाति वाञ्छितार्थप्रदो जिनः ॥९॥

अन्वयः—झटिति यद् अर्थार्पकत्वं सा प्रसत्तिः उच्यते। यथा—वाञ्छितार्थप्रदः जिनः कल्पद्रुम इव आभाति ।

पदार्थ —झटिति—अविलम्बेन, दर्शनोच्चारणश्रवणमात्रेणैवेत्यर्थ, यद् अर्थार्पकत्वम्—अर्थप्रत्यायकत्वम्, सा प्रसत्ति—प्रसन्नताभिधो गुण, उच्यते—कथ्यते, बुधैरिति शेष । यथा—वाञ्छितार्थप्रद—वाञ्छितम् अभिलषितम् अर्थं वस्तु प्रकर्षेण ददातीति तथा, अभीष्टवस्तुदानपर इत्यर्थ, जिन—बुद्धदेव, कल्पद्रुम इव—पारिजातवत्, आभाति—शोभते । अत्र प्रसिद्धार्थैरेव पदैर्वस्तुनो वर्णितत्वात् झटित्यर्थप्रतीते प्रसन्नता नाम गुण ।

भावार्थ—जहां अति शीघ्र अर्थात् उच्चारण या श्रवण मात्र से ही अर्थ का बोध हो जावे, वहां प्रसन्नता नामक गुण कहा गया है। जैसे—'अभीष्ट वस्तुओं का देने वाले भगवान् बुद्ध, कल्पवृक्ष के समान सुशोभित हो रहा है'। यहां फौरन ही अर्थ प्रतीति होने से प्रसन्नता गुण है ॥९॥

सोदाहरणं समाधिं निरूपयति—

स समाधिर्यदन्यस्य गुणोऽन्यत्र निवेश्यते ।
यथाश्रुभिररिस्त्रीणां राज्ञः पल्लवितं यशः ॥१०॥

अन्वयः—यत् अन्यस्य गुणः अन्यत्र निवेश्यते स समाधिः। यथा—अरिस्त्रीणाम् अश्रुभिः राज्ञः यशः पल्लवितम् ।

पदार्थ —यत्—यत्र, अन्यस्य—वस्त्वन्तरस्य, गुण—धर्म, अन्यत्र—अपरस्मिन् वस्तुनि, निवेश्यते—आरोप्यते स्थाप्यते वा, स समाधि—तदाख्यो गुण, बुधैरुच्यत इति शेष । यथा—अरिस्त्रीणा—शत्रुवनितानाम्, अश्रुभि—

नेत्रवारिभिः, तत्पतिविनाशकारणकैः, राज्ञः-विजयिनो नृपस्य, यशः-कीर्तिः, पल्लवित-सञ्जातपत्रम्, विस्तारं प्राप्तमित्यर्थः। अत्र लतापादपादीनामन्येषां गुणः पल्लवितत्वम् अत्र यशसि निवेशितमिति समाधिर्गुणः।

भावार्थ—जहां अन्य के गुण का, अन्य में आरोप किया जावे, वह समाधि नामक गुण कहलाता है। जैसे—'शत्रुओं की स्त्रियों के आंसुओं से, राजा का यश पल्लवित अर्थात् विस्तृत हो गया'। यहां लता वृक्ष आदि का पल्लवित होना गुण, यश में आरोप किया गया है, इस लिये यहां समाधि नामक गुण है ॥१०॥

क्रमप्राप्तं श्लेषौजसी लक्षयति—

श्लेषो यत्र पदानि स्युः स्यूतानीव परस्परम्।
ओजः समासभूयस्त्वं तद् गद्येष्वतिसुन्दरम् ॥११॥

अन्वय—यत्र पदानि परस्परं स्यूतानि इव स्युः [सः] श्लेषः। समासभूयस्त्वम् ओजः। तत् गद्येषु अतिसुन्दरम् [भवति]।

पदार्थ—यत्र-यस्यां रचनायाम्, पदानि-शब्दाः, पृथग्भूतान्यपि परस्परं-मिथः स्यूतानि इव-गुम्फितानि संश्लिष्टानीव, स्युः-भवेयुः, सः-गुणः, श्लेषः-एतन्नाम्ना कथ्यते। समासभूयस्त्व-यत्र च समासबाहुल्यं स्यात्, तत्र ओजः-एतदाख्यो गुणः, स्मर्यत इति शेषः। तत्-ओजः, गद्येषु छन्दोरहितेषु काव्येषु, अतिसुन्दरं-नितरां मनोहरम्, भवतीति शेषः।

भावार्थ—जिस रचना में, पृथक् भी पद, आपस में एक दूसरे के साथ गुथे हुए हों, वह श्लेष नामक गुण कहाता है। तथा जहां समास का बाहुल्य हो, वहां ओज नामक गुण होता है। यह ओज गुण गद्यकाव्यों में अति सुन्दर मालूम होता है ॥११॥

श्लेषोदाहरणमाह—

मुदा यस्योद्गीतं सह सहचरीभिर्वनचरै-
र्मुहुः श्रुत्वा हेलोद्धृतधरणिभारं भुजबलम्।
दरोद्यच्चद्दर्भाङ्कुरनिकरदम्भात् पुलकिता-
श्चमत्कारोद्रेकं कुलशिखरिणस्तेऽपि दधिरे ॥१२॥

अन्वयः—ते कुलशिखरिणः अपि, वनचरैः सहचरीभिः सह मुहुः उद्गीतं हेलोद्धृतधरणिभारं यस्य भुजबलं श्रुत्वा दरोद्गच्छद्दर्भाङ्कुरनिकरदम्भात् मुदा पुलकिताः चमत्कारोद्रेकं दधिरे।

पदार्थ—ते-प्रसिद्धा, कुलशिखरिण-कुलपर्वता अपि [ "महेन्द्रो मलय सह्य शुक्तिमानृक्षपर्वत । विन्ध्यश्च पारि(पा)यात्रश्च सप्त वै कुलपर्वता " ], वनचरै-जङ्गलवासिभिर्भिल्लै, सहचरीभि-सङ्गिनीभि, पत्नीभिरित्यर्थ, सह-समम्, मुहु-वारंवारम्, उद्गीतम्-उच्चै स्वरेण कीर्तितम्, हेलोद्धृतधरणिभार-हेलया अनायासेन, उद्धृत-उत्पाटित, विनाशित इति यावत्, धरणे-पृथिव्या, भार-क्लेशो येन तत्, तथाविधं यस्य-राज्ञ, भुजबल-बाहुशक्तिम्, श्रुत्वा-आकर्ण्य, दरोद्गच्छद्दर्भाङ्कुरनिकरदम्भात्-दरोद्गच्छन्त-ईषदुन्मिषन्त अल्प विकसन्त, ये दर्भाङ्कुरा-कुशाप्ररोहा, तेषा निकर-समूह, तस्य दम्भात्-व्याजात्, मुदा-हर्षेण, पुलकिता-रोमाञ्चिता सन्त, चमत्कारोद्रेक विस्मयबाहुल्यम्, दधिरे-धृतवन्त। अत्र रचनागतान्यखिलपदानि राजयशस सर्वव्यापित्वरूपमर्थमवबोधयितुम् एकसूत्रानुस्यूतमणिगणा इव परस्पर गुम्फितानि इति श्लेषो गुण।

भावार्थ—वे प्रसिद्ध-कुल पर्वत भी भिल्लिनियों के साथ भीलों के द्वारा बार २ गाये हुए, अनायास ही पृथिवी के कष्ट को नष्ट करने वाले, उस राजा के बाहुबल को सुनकर थोड़ी २ ऊपर निकली हुई अति विस्तृत दूब के बहाने से, हर्ष के कारण रोमाञ्चित और बहुत ही विस्मित हो गये। इस पद्य के सब ही पद राजा के यशोविस्तार का वर्णन करने में परस्पर गुंथे हुए हैं, इस लिये यहां श्लेष गुण है ॥१२॥

ओजोगुणमुदाहरति गद्यबन्धेन—

समराजिरस्फुरदरिनरेशकरिनिकराशिरःसरम-
सिन्दूरपूरपरिचयेनेवारुणितकरतलो देव ॥१३॥

अन्वय—देव ! समराजिरस्फुर.... पूरपरिचयेन इव [भवान्] अरुणितकरतल' [विराजते]।

पदार्थ—हे देव!-राजन्! समराजिर. ....पूरपरिचयेन-समर प्राङ्गण-

भूमिः, एव अजिरम्–अङ्गणम्, तस्मिन् स्फुरन्ति शोभमानानि यानि अरिनरेशानां–शत्रुनृपतीनाम्, करिनिकरस्य–गजवृन्दस्य, शिरांसि–शीर्षाणि, युद्धे छिन्नानि मस्तकानीत्यर्थः, तत्र सरसाः–रसेन जलादिना सहिताः, क्लिन्ना इत्यर्थः, ये सिन्दूरस्य–नागसम्भवस्य, पूराः–प्रवाहाः, तेषां परिचयेन–सङ्गेन, इव–इति उत्प्रेक्षायाम्, भवान् अरुणितकरतलः–अरुणितं रक्तीकृतं करतलं यस्य एवंभूतः सन्, विराजते विभाति वेति शेषः । अत्र समासबाहुल्यात् ओजो नाम गुणः ।

भावार्थ—हे राजन् ! लड़ाई के मैदान में, शत्रु राजाओं के हाथियों के कटे हुए सुशोभित शिरों पर लगे हुए गीले सिन्दूर से मानो लाल हाथों वाले आप शोभित हो रहे हैं ॥१३॥

**माधुर्यसौकुमार्यगुणौ लक्षयति—**

**सरसार्थपदत्वं यत् तन्माधुर्यमुदाहृतम् ।**
**अनिष्ठुराक्षरत्वं यत् सौकुमार्यमिदं यथा ॥१४॥**

**अन्वयः—यत् सरसार्थपदत्वम् तत् माधुर्यम् उदाहृतम् । यत् अनिष्ठुराक्षरत्वम्, इदम् सौकुमार्यम् । यथा—**

पदार्थ.—यत् सरसार्थपदत्वं–रसेन सहितोऽर्थो यस्मिन्, तादृशं पदं यत्र वाक्ये तस्य भावः तत्त्वम्, रसोपेतार्थबोधकपदशालित्वमित्यर्थः । अथवा अर्थाश्च पदानि चेत्यर्थपदानि रससहितानि अर्थपदानि यत्र तस्य भावस्तत्त्वम् । तत् माधुर्यं–तदाख्यो गुणः, उदाहृतं–कथितम् । यच्च अनिष्ठुराक्षरत्वं–न सन्ति निष्ठुराणि कर्कशानि अक्षराणि वर्णा यत्र तस्य भावस्तत्त्वम्, सुकोमलवर्णशालित्वमित्यर्थं, इदं सौकुमार्यं–तदाख्यो गुणः, उदाहृतमित्यनापि योज्यम् । यथा–इत्यग्रिमोदाहरणश्लोकेन सम्बध्यते ।

भावार्थ—जहां रस सहित अर्थ और पदों का प्रयोग किया गया हो, वहां माधुर्य गुण कहा जाता है । तथा जहां सुकोमल पदावली हो वहां सौकुमार्य गुण होता है । जैसे अगले श्लोकों में ॥१४॥

**माधुर्यमुदाहरति—**

**फणमणिकिरणालीस्यूतचञ्चन्निचोलः**
**कुचकलशनिधानस्येव रक्षाधिकारी ।**

उरसि विशदहारस्फारतामुज्जिहानः
किमिति करसरोजे कुण्डली कुण्डलिन्याः ॥१५॥

अन्वय.—कुचकलशनिधानस्य रक्षाधिकारी इव फणमणिकिरणालीस्यूतचञ्चन्निचोलः उरसि विशदहारस्फारतामुज्जिहानः कुण्डली कुण्डलिन्याः करसरोजे किमिति [तिष्ठति]।

पदार्थ —कुचकलशनिधानस्य—कुचौ—उरोजौ एव कलशौ घटौ, तावेव निधान—निधि कोषस्तस्य, स्तनकुम्भरूपरत्नागारस्येत्यर्थ । रक्षाधिकारी इव—रक्षायेऽधिकृत इव, तद्रक्षितु नियुक्त इवेत्यर्थ, फणमणिकिरणालीस्यूतचञ्चन्निचोल —फणे स्फटे स्थितो मणी रत्नम्, तस्य किरणाल्या रश्मिधारया स्यूत संश्लिष्ट, अत एव चञ्चन् स्फुरन् निचोल प्रच्छदपटो येन तथाभूत, उरसि—वक्षसि, विशदहारस्फारता—विशद स्वच्छो यो हार, तद्वत् स्फारतां दैर्घ्यम्, उज्जिहान —प्राप्नुवन्, कुण्डली—सर्प, कुण्डलिन्या —कुण्डले कर्णभूषणे विद्येते यस्या सा तस्या, कुण्डलालङ्कृताया कामिन्या इत्यर्थ, करसरोजे—पाणिपद्मे, किमिति—कथम, तिष्ठतीति शेष । काचित्कामिनी करस्थितहारयष्टिं दृष्ट्वा कामिन कस्यचित् हारे सर्पभ्रान्तिरिति शृङ्गार-रसानुगुण्येन माधुर्यम्।

भावार्थ—कुच कलश के खजाने का मानों रखवाला, फण पर स्थित मणियों की किरण पंक्ति से ओत प्रोत और इसी लिये कञ्चुकी को फड़काने वाला, छाती पर विस्तृत हार की लम्बाई को प्राप्त करता हुआ यह सर्प, कर्ण भूषण पहिने कामिनी के कर कमल में क्यों बैठा है ? हाथ में गले का हार पकड़े हुए किसी नायिका को देखकर, किसी कामी को हार में सर्प भ्रान्ति हुई इस प्रकार शृङ्गार रस की अनुकूलता से यहां माधुर्य गुण है ॥१५॥

सौकुमार्यमुदाहरति—

प्रतापदीपाञ्जनराजिरेव
देव ! त्वदीयः करवाल एषः।
नो चेदनेन द्विषतां मुखानि
श्यामायमानानि कथं कृतानि ॥१६॥

अन्वय.—देव! त्वदीयः एष करवालः प्रतापदीपाञ्जनराजिः एव, नो चेद् अनेन द्विषतां मुखानि श्यामायमानानि कथं कृतानि।

पदार्थ —हे देव!–राजन्! त्वदीय–तव सम्बन्धी, एष–अयं पुरो दृश्यमान, करवाल–खड्ग, प्रतापदीपाञ्जनराजि–प्रताप प्रभाव एव दीप प्रदीपज्वाला, तस्य अञ्जनराजि–कज्जललेखा एव विद्यत इति शेष। नो चेद्–अन्यथा, अनेन–करवालेन साधनभूतेन, द्विषता–शत्रूणाम्, मुखानि–आननानि, श्यामायमानानि–मलिनत्ववन्ति, कथ–केन प्रकारेण, कृतानि–सम्पादितानि, भवता इति शेष। अथवा अनेन करवालेन कर्त्रा कथ कृतानि। अत्र पदानां कोमलत्वात् माधुर्यं गुण।

भावार्थ—हे राजन्! आपकी यह तलवार, निश्चित ही आपके प्रताप रूप दीपक की अञ्जन रेखा है, नहीं तो शत्रुओं के मुखों का काला कैसे कर सकती॥१६॥

प्रकरणमुपसंहरति—

गुणैरमीभिः परितोऽनुविद्धं
मुक्ताफलानामिव दाम रम्यम्।
देवी सरस्वत्यपि कण्ठपीठे
करोत्यलङ्कारतया कवित्वम्॥१७॥

अन्वयः—देवी सरस्वती अपि मुक्ताफलानां दाम इव अमीभिः गुणैः परितः अनुविद्धं रम्यं कवित्वम् अलङ्कारतया कण्ठपीठे करोति।

पदार्थ —देवी–दिव्यगुणयुता कान्तिमती वा, सरस्वती–भारती, अपि मुक्ताफलाना–मौक्तिकानाम्, दाम इव–मालामिव, मुक्ताहारमिवेत्यर्थ। अमीभि –निरुक्तै, गुणै –औदार्यादिभि, सूत्रैश्च, परित –सर्वत, अनुविद्धम्–अनुस्यूतम्, व्याप्तमित्यर्थ। अत एव रम्य–मनोहारि, कवित्व–काव्यम्, अलङ्कारतया–अलङ्कारभावेन, कण्ठपीठे–गलस्थल्याम्, करोति–धारयति। यथाऽङ्गना कण्ठशोभार्थं रत्नहार धारयन्ति, तथौदार्यप्रसादादिगुणान्वित शोभन काव्य देवी सरस्वत्यपि महार्हभूषणतया निजकण्ठमारोपयतीति भाव।

भावार्थ—सरस्वती देवी भी, मोतियों के हार की तरह, औदार्य आदि गुणों से अन्वित, रमणीय काव्य को आभूषण रूप से अपने कण्ठ में धारण करती है ॥१७॥

इति वाग्भटालङ्कारव्याख्यायां तात्पर्यबोधिन्यां
तृतीयः परिच्छेदः ।



## चतुर्थः परिच्छेदः ।

अथालङ्कारान् विवक्षुः प्रथमं तदुपयोगितामाह—

दोषैर्मुक्तं गुणैर्युक्तमपि येनोज्झितं वचः ।
स्त्रीरूपमिव नो भाति तं ब्रुवेऽलङ्क्रियोच्चयम् ॥१॥

अन्वयः—दोषैः मुक्तं गुणैः युक्तम् अपि वचः येन उज्झितं स्त्रीरूपमिव नो भाति, तम् अलङ्क्रियोच्चयं ब्रुवे ।

पदार्थः—दोषैः द्वितीयपरिच्छेदप्रतिपादितैरनर्थकादिभिः, मुक्तं—रहितम्, गुणैः तृतीयपरिच्छेदप्रतिपादितैः, औदार्यादिभिः, युक्तं—सहितम्, अपि वचः—कवेर्वाक्यम्, येन—वक्ष्यमाणेन अलङ्कारसमूहेन, उज्झितं—त्यक्तं सत्, स्त्रीरूपमिव—स्त्रिया नार्या रूपं सौन्दर्यमिव, नो भाति—न शोभते, तं—वक्ष्यमाणम् अलङ्क्रियोच्चयम्—अलङ्क्रियाणाम् अलङ्काराणाम् शब्दगतानामर्थगतानां च उच्चयं समुदायम्, ब्रुवे—वर्णयामि ।

भावार्थ—अनर्थक आदि दोषों से रहित और औदार्य आदि गुणों से युक्त भी काव्य, जिसके बिना, स्त्री के रूप के समान शोभा को प्राप्त नहीं होता, उस अलङ्कार समुदाय का अब वर्णन करता हूं ॥१॥

शब्दालङ्कारानर्थालङ्कारांश्चोद्दिशति—

चित्रं वक्रोक्त्यनुप्रासौ यमकं ध्वन्यलङ्क्रियाः ।
अर्थालङ्कृतयो जातिरुपमा रूपकं तथा ॥२॥
प्रतिवस्तूपमा भ्रान्तिमानाक्षेपोऽथ संशयः ।
दृष्टान्तव्यतिरेकौ चापह्नुतिस्तुल्ययोगिता ॥३॥
उत्प्रेक्षार्थान्तरन्यासः समासोक्तिर्विभावना ।
दीपकातिशयौ हेतुः पर्यायोक्तिः समाहितम् ॥४॥
परिवृत्तिर्यथासंख्यं विषमः ससहोक्तिकः ।
विरोधोऽवसरः सारं संश्लेषश्च समुच्चयः ॥५॥

अप्रस्तुतप्रशंसा स्यादेकावल्यनुमाऽपि च ।
परिसङ्ख्या तथा प्रश्नोत्तरं सङ्कर एव च ॥६॥

अन्वयः—१ चित्रम्, २ वक्रोक्तिः, ३ अनुप्रासः, ४ यमकम् ध्वन्यलङ्क्रियाः । १ जातिः, २ उपमा, ३ रूपकम्, तथा ४ प्रतिवस्तूपमा, ५ भ्रान्तिमान्, ६ आक्षेपः, अथ ७ संशयः, ८ दृष्टान्तः, ९ व्यतिरेकः, १० अपह्नुतिः, च ११ तुल्ययोगिता, १२ उत्प्रेक्षा, १३ अर्थान्तरन्यासः, १४ समासोक्तिः, १५ विभावना, १६ दीपकम्, १७ अतिशयः, १८ हेतुः, १९ पर्यायोक्तिः, २० समाहितम्, २१ परिवृत्तिः, २२ यथासंख्यम्, २३ विषमः, २४ सहोक्तिः, २५ विरोधः, २६ अवसरः, २७ सारम्, २८ संश्लेषः, च २९ समुच्चय, ३० अप्रस्तुतप्रशंसा, ३१ एकावली, अपि च ३२ अनुमा स्यात्, ३३ परिसङ्ख्या, तथा ३४ प्रश्नोत्तरम्, ३५ सङ्करः च अर्थालङ्कृतय एव ।

पदार्थ —चित्रादयश्चत्वार, ध्वन्यलङ्क्रिया —शब्दालङ्कारा, जातिप्रभृतयश्च पञ्चत्रिंशत्संख्याका, अर्थालङ्कृतय —अर्थालङ्कारा एव बोध्या इति शेष ।

भावार्थ—चित्र आदि चार शब्दालङ्कार, और जाति आदि पैंतीस अर्थालङ्कार समझने चाहियें ॥६॥

तत्र चित्रलक्षणं क्रमप्राप्तमाह—

यत्राङ्गसन्धितद्रूपैरक्षरैर्वस्तुकल्पना ।
सत्यां प्रसत्तौ तच्चित्रं तच्चित्रं चित्रकृच्च यत् ॥७॥

अन्वयः—यत्र अङ्गसन्धितद्रूपैः अक्षरैः वस्तुकल्पना, तत् प्रसत्तौ सत्यां चित्रम्, यत् च चित्रकृत् तत् चित्रम् ।

पदार्थ —यत्र–यस्मिन् पद्यबन्धे, अङ्गसन्धितद्रूपै —अङ्गानाम् अवयवानां ये सन्धय संघटनाविशेषास्तद्रूपैस्तादृशै तैरेव वा अक्षरै —वर्णै, वस्तुकल्पना–प्रतिपाद्यस्यार्थस्य रचना, तत्–तादृक् कल्पनमित्यर्थ, प्रसत्तौ–प्रसन्नतायाम्, सत्यां–विद्यमानायाम्, प्रसादगुणसम्पन्ने सतीत्यर्थं, चित्र–तदाख्योऽलङ्कार, भवतीति शेष । यच्च–किञ्च यत् संघटनम्, चित्रकृत्–चमत्कारादि, स्वरव्यञ्जनादीनां योजनविशेषेषु विस्मयकारीत्यर्थं, तत्–

तदपि सघटनम्, चित्र-तदाख्योऽलङ्कार उच्यत इति शेष । यत्र निष्णात कवि पद्मपत्रच्छत्रादिरचनानुरूपान् वर्णान् शब्दान् वा प्रयुनक्ति, तत्र चित्राख्योऽलङ्कारो भवतीति भाव ।

भावार्थ—जिस पद्य रचना में, अवयवों की बनावट समान वर्णों के द्वारा करके, प्रतिपादनीय अर्थ का वर्णन किया जाय, और प्रसाद गुण भी बना रहे, वह चित्र नामक शब्दालकार होता है । तथा उसे भी चित्रालङ्कार कहते हैं, जहा पदावली में कुछ भी चमत्कार हो ॥७॥

चित्रालङ्कारमुदाहरति—

जनस्य नयनस्थानध्वान एनश्छिनत्त्विनः ।
पुनः पुनर्जिनः पीनज्ञानध्यानधनः स नः ॥८॥

अन्वयः—जनस्य नयनस्थानध्वानः पीनज्ञानध्यानधनः स जिनः नः एनः पुन पुनः छिनत्तु ।

पदार्थ —जनस्य–लोकस्य, नयनस्थानध्वान –नयने नेत्ररूपे स्थाने पदे ध्वान शब्द निर्वाणमार्गप्रदर्शक शास्त्र यस्य तथाभूत, यदुपदिष्ट शास्त्र लोका सतत सादर पठन्तीति भाव । पीनज्ञानध्यानधन –पीने परिपुष्टेऽत्यन्त विशदे वा ज्ञानध्याने बोधानुसन्धानरूपे एव धन सम्पत् यस्य तथाभूत, निरतिशयज्ञानविशिष्ट स्वात्मानुभववाधैर्यं । इन –स्वामी, स –प्रसिद्ध, जिन –बुद्ध, न –अस्माकम्, एन –पापम्, पुन पुन –वारवारम्, छिनत्तु–विनाशयतु ।

इद पद्य षोडशदलकमलबन्धेन गोमूत्रिकाबन्धेन च पठितु शक्यते । तदस्माभिरधस्तान्निर्दिष्टम् । यद्यप्यत्र 'इन' 'पुन' 'जिन' इत्यादौ विसर्गपरो नकार आवश्यक 'जनस्य' इत्यादौ च नकारो निर्विसर्गपर एवेति वैषम्यम्, तथापि—

'यमकश्लेषचित्रेषु बवयोर्डलयोर्न भिद् ।
नानुस्वारविसर्गौ च चित्रभङ्गाय सम्मतौ ॥' [ वाग्भ० १।२०]

इत्याद्युक्तप्रकारेण न कश्चिद्दोष इति दिक् ।

भावार्थ—जिनके उपदेश वाक्य, मनुष्यों के नेत्रों में सदा स्थान पाते हैं, विस्तृत ज्ञान और आत्मानुभव ही जिनकी सम्पत्ति है, वह प्रसिद्ध स्वामी बुद्ध, हमारे पापों को सदा नष्ट करें ॥८॥

षोडशपत्रपद्मबन्धचित्रम् ।



गोमूत्रिकाबन्धचित्रम् ।

| | | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ज | न | स्य | न | य | न | स्था | न | ध्या | न | ए | न | छि | न | रिव | न |
| पु | म | पु | न | जि | न | पी | न | शा | न | ध्या | न | ध | म | स | न |

एकस्वरचित्रमुदाहरति—

गणनरगणवरकरतरचरण !
परपदशरणगजनपथकथक ! ।
अमदन ! गतमद ! गजकरयमल !
शमसय ! जय भवघनवनदहन ! ॥६॥

**अन्वयः—गगनरगणवरकरतरचरण ! परपदशरणगजन-पथकथक ! अमदन ! गतमद ! गजकरयमल ! शममय ! भय-घनवनदहन ! जय।**

पदार्थः—गगनरगणवरकरतरचरण–गणा ऋषयो देवा वा, नरा मनुष्याः, तेषां गणः समूहः संघः, तस्य वरकरतरौ–अतिशयेन वाञ्छितार्थं सम्पादयितारौ, अभिलषितार्थसाधकावित्यर्थः, चरणौ पादौ यस्य, तत्सम्बुद्धौ तथा, चरणसेवकानां जनानामभीष्टफलप्रद इत्यर्थः। परपदशरणगजनपथकथक–परमुत्कृष्टं यत् पदं परपदं–निर्वाणं मोक्षस्थानमित्यर्थः, तदेव शरणम् आश्रयं गच्छन्तीति परपदशरणगाः, ते च ते जनाः, तेषां पथो मार्गस्य कथकः कर्तव्योपदेशेन प्रदर्शक इत्यर्थः, तत्सम्बुद्धौ तथा, अमदन–निष्काम, गतमद–निरहङ्कार, गजकरयमल–गजस्य गजकरस्य करिशुण्डादण्डस्य इव करयमलं हस्तयुग्मं यस्य, तत्सम्बुद्धौ तथा, एककरशब्दस्यात्र लोपः, हे महाबाहो ! इत्यर्थः। शममय–शान्तिस्वरूप, किञ्च हे भयघनवनदहन–भयं भीतिः, जन्ममरणप्रबन्धात्मकमेव घनं निबिडं वनमरण्यं तस्य दहनोऽग्निः, तद्विनाशक इत्यर्थः, तत्सम्बुद्धौ तथा, जय–सर्वोत्कर्षेण वर्तस्व। चित्रत्वात् पादान्ते गुरूणामभावोऽपि न दोषावहः। 'वा पादान्ते' इति नियमेन वा गुरुत्वमव-सेयम्। अत्र एकस्याकारस्यैव स्वरस्य विद्यमानत्वात् एकस्वरचित्रमिदम्।

भावार्थ—अपने चरण सेवक, देव और मनुष्यों को अभीष्ट फल देने वाले, परमपद की ओर जानेवाले पुरुषों के मार्ग प्रदर्शक, कामवासनाओं से अलग, अहंकार रहित, हाथी की सूंड के समान बाहुओं वाले, शान्तिस्वरूप, और सांसारिक भयरूपी घने जंगल के लिए अग्निरूप आप, सबसे उत्कृष्ट हों ॥९॥

**मात्राच्युतकमुदाहरति—**

> मूलस्थितिमधःकुर्वन् पात्रैर्जुष्टो गताचरैः।
> विटः सेव्यः कुलीनस्य तिष्ठतः पथिकस्य सः ॥१०॥

**अन्वयः—मूलस्थितिम् अधः कुर्वन् गताचरैः पात्रैः जुष्टः स विटः पथि तिष्ठतः कस्य कुलीनस्य सेव्यः ?।**

पदार्थः—मूलस्थितिं–मूलस्य कुलस्य स्थितिं मर्यादाम्, निजकुलाचार-

मित्यर्थः, अध कुर्वन्–अनादरयन्, कुलाचारमपहाय कुमार्गगामी इत्यर्थः । गताक्षरे–गतानि दूरीभूतानि अक्षराणि अकारादयो वर्णा येभ्यस्ते मूर्खे, पात्रे–नटविदूषकादिभिः, जुष्ट–सेवित, स–प्रसिद्ध, विट–धूर्त, पथि-सन्मार्गे, तिष्ठत–प्रवर्त्तमानस्य कस्य कुलीनस्य–श्रेष्ठकुलप्रसूतस्य पुरुषस्य, सेव्य–सत्करणीय स्यात्, न कस्यापीत्यर्थः । अत्र विटपदे इकारस्य प्रच्युतौ वट इति पदसत्त्वेऽन्य एवार्थः कल्प्यते । तथाहि—

मूलस्थिति–मूलानां शिफानां स्थितिमवस्थानम्, अध कुर्वन्–तलदेशे कुर्वन्, गताक्षरे–गतो दूरीभूत आ समन्तात् क्षरो नाशो येषां ते, सरस हरितवर्णैरित्यर्थः, पात्रे–पर्णैः जटाभिर्वा, जुष्ट–सेवित, परितो व्याप्त इत्यर्थः, स–प्रसिद्ध, वट–न्यग्रोधपादप, कुलीनस्य–कौ पृथिव्यां लीनस्य समुपविष्टस्य, तिष्ठत–मार्गगमनखेदात् विश्रामेच्छया तत्रैवासीनस्य, पथिकस्य पान्थस्य, सेव्य–आश्रयणीय इत्यर्थः । अत्रेकारमात्राच्युतौ अन्यार्थोपपत्तेः स्फुट एव चमत्कारः, तस्मात् मात्राच्युतकचित्रमिदम् ।

नरके-रौरवादौ, दुःखिता-कष्टभागिताम्, यान्ति-प्राप्नुवन्ति । अत्र 'वचने' इति पदात् अनुनासिकभूतबिन्दुच्युतौ अन्य एवार्थं कल्प्यते । तथाहि—

**अन्वयः—नर ! धर्माधर्मविदः साधुपक्षपातसमुद्यताः गुरूणां वचने निष्ठाः के दुःखितां यान्ति ? ।**

पदार्थ —नर ! हे पुरुषोत्तम ! धर्माधर्मविदः—धर्मं पुण्यम् अधर्मं पापं च विविच्य जानन्तीति ते तथोक्ता, को धर्मः कश्चाधर्म इति तत्त्वविद, साधुपक्षपातसमुद्यता—साधूनां सज्जनानां पक्षपाते सिद्धान्ताभिनिवेशे मताग्रहे समुद्यता समुत्सुका, अनुरागवन्त इत्यर्थः । गुरूणां—पूज्यानां पितादीनाम्, वचने—उपदेशे आज्ञापालने वा, निष्ठाः—नितरां स्थिता अतिशयश्रद्धावन्त इत्यर्थः । के—जना, दुःखिता—पीडावस्थाम्, यान्ति—गच्छन्ति ? न केऽपि इत्यर्थः । अत्र बिन्दुच्युतिमात्रेण विलक्षणार्थप्रतीतिः स्फुट एव चमत्कार इति बिन्दुच्युतकचित्रमिदम् ।

भावार्थ—धर्म को ही अधर्म समझने वाले सज्जनों के विचारों को गिराने में सदा तैयार, अपने पूज्य व्यक्तियों के उपदेश में बड़े चतुर पुरुष नरक में दुःख के भागी होते हैं । अथवा—

हे पुरुष ! धर्म और अधर्म की वास्तविकता को पृथक् २ समझने वाले, श्रेष्ठ पुरुषों के मतों में आग्रह रखने वाले, गुरुओं के वचनों में सदा स्थित रहने वाले कौन दुःख को प्राप्त होते हैं ? अर्थात् कोई नहीं ॥११॥

एकव्यञ्जनचित्रमुदाहरति—

**ककाकुकङ्ककेकाङ्ककेकिकोकैककुः ककः ।**
**कुकुकैकः काककाककककोकुकुककाङ्ककुः ॥१२॥**

**अन्वयः—ककाकुकङ्ककेकाङ्ककेकिकोकैककुः कुकुकैकः काककाककककोकुकुककाङ्ककुः ककः (वर्तते) ।**

पदार्थ —ककाकुकङ्ककेकाङ्ककेकिकोकैककु —कं सुखमस्यामस्तीति का मत्वर्थीयेऽचि टापि च रूपम्, सुखोत्पादिका इत्यर्थः, तादृशी काकु ध्वनिर्येषां ते ककाकव, ते च ते कङ्का जलपक्षिविशेषा, केका ध्वनिविशेषोऽङ्कः चिह्नं येषां ते केकाङ्का, ते च ते केकिनो मयूरा, कोका चक्रवाकाश्च, तेषामेका अद्वितीया कुः भूमि स्थानं निलय इत्यर्थः । विविधजलपक्षिनिवास-

भूमिरिति भाव । कुकुकौककाककाककर्कांकुकुकखाङ्कु –कव कुत्सिता , कवश्च कवश्चेति कुकव , द्विरुक्तिरतिशयद्योतनार्था, अत्यन्त कुत्सिता इत्यर्थ । काका हि लोके पक्षिषु मध्येऽत्यन्त कुत्सिता एव गण्यन्ते । क जलम् ओको निवासस्थान येषा ते कौकस , काका एव काकका , कुकव कौकसश्च ते काकका इति कुकुकौककाककाः नितरा गर्हिता जलकाका इत्यर्थ । तान् आकयन्ति समन्तात् शब्दापयन्ति या ऋच ऋग्वेदीयमन्त्रविशेषा , मन्त्रोच्चारणपूर्वक मेव हि काकेभ्यो बलिरुपह्रियते इति तदेव ऋग्भि काकाना शब्दापनम्, ता ऋच एव काकर्को ध्वनिविशेषा , तान् कोकति उच्चारयति य , क ब्रह्मा, स अङ्के क्रोडे यस्य स कुकुकौककाककाककर्काङ्कुकुकखाङ्क , विष्णुरित्यर्थ । तस्य कु –निवसतिस्थानम्, आवास इत्यर्थ । एवभूत कक –केन जलेनोपलक्षित , को वायुर्वा यत्र विद्यते स समुद्रो वर्तत इति शेष । अत्र एकस्यैव ककारवर्णस्य गत्वेन बन्धस्य स्फुट चमत्कारित्वमित्येकव्यञ्जनचित्रमिदम् ।

दधत्–कुर्वन्, अथवा रणडम्बर–रणस्य समरस्य डम्बर पादन्यासं कुर्वन्, रणसम्बन्धिपादन्यासविशेष कुर्वन्नित्यर्थ । प्रसरति–प्रसर्पेण वेगेन चलतीत्यर्थ । अत्र 'करेणु' इति पदात् ककारप्रच्युतौ द्वितीयोऽर्थ सम्पद्यते । तथाहि—

हे देव! यौष्माकसेनाया–भवदीयवाहिन्या, असौ रेणु–दूरमुत्पतित रज, दिवाकरस्य–भानो, आश्लेष–समन्तात् आलिङ्गन कुर्वन्, रणडम्बर–रणे संग्रामे डम्बर भयङ्करता च, दधत्–सम्पादयन्, प्रसरति–परितो व्याप्नोतीत्यर्थ । अत्र ककारच्युतावन्यार्थप्रतिपत्तेश्चमत्कारित्वात् एकव्यञ्जनच्युतकचित्रमिदम् ।

भावार्थ—हे राजन्! आपकी सेना का वह प्रसिद्ध हाथी, आकाश में अपनी सूंडको घुमाता हुआ, युद्धभूमि में भयकरता को उत्पन्न करता हुआ, अथवा सग्राम सम्बन्धी कदम रखता हुआ वेग से चल रहा है । अथवा—

हे राजन्! आपकी सेना के चलने से उठी हुई यह धूल, सूरज को चारों ओर से ढकती हुई, और संग्राम में भय की अवस्था को पैदा करती हुई, सब ओर फैल रही है ॥१३॥

चित्रवर्ण्य सप्रपञ्चं निरूप्य वक्रोक्तिमधुना लक्षयति—

**प्रस्तुतादपरं वाच्यमुपादायोत्तरप्रदः ।**
**भङ्गश्लेषमुखेनाह यत्र वक्रोक्तिरेव सा ॥१४॥**

**अन्वय—यत्र उत्तरप्रदः प्रस्तुतात् भङ्गश्लेषमुखेन अपरं वाच्यम् उपादाय आह सा एव वक्रोक्तिः ।**

पदार्थ—यत्र–यस्मिन् पद्यबन्धे, उत्तरप्रद–उत्तरदाता पुमान्, प्रस्तुतात्–प्रकान्तादर्थात्, भङ्गश्लेषमुखेन–सभङ्गश्लेषाश्रयेण अभङ्गश्लेषाश्रयेण वा, अपरम्–अन्यम्, वाच्यम्–अर्थम्, उपादाय–आश्रित्य, आह–वदति, सा एव वक्रोक्ति–एतदाख्योऽलङ्कार कथ्यत इति शेष ।

भावार्थ—जिस रचना में उत्तर देनेवाला, प्रस्तुत अर्थ से, सभङ्गश्लेष अथवा अभङ्गश्लेष के द्वारा, भिन्न अर्थ का आश्रय लेकर कथन करता है, उसे वक्रोक्ति नामक अलङ्कार कहते हैं ॥१४॥

सभङ्गश्लेषवक्रोक्तिमुदाहरति—

नाथ ! मयूरो नृत्यति
　　तुरगाननवक्षसः कुतो नृत्यम् ।
ननु कथयामि कलापिन-
　　मिह सुखलापी प्रिये ! कोऽस्ति ॥१५॥

अन्वयः—नाथ ! मयूरो नृत्यति । तुरगाननवक्षसः नृत्यं कुतः ? ननु कलापिनं कथयामि । प्रिये ! इह सुखलापी कोऽस्ति ? ।

पदार्थ —काचिन्मुग्धा नायिका पतिं सम्बोध्य ब्रूते—नाथ !–हे स्वामिन् ! मयूर -शिखी, नृत्यति-नर्तनं करोति, मयूरनृत्यदर्शनस्य कामोद्दीपकत्वान्मुग्धाया -तयोक्ति । तदभिप्राय बुद्ध्वाऽपि धीरललितो नायकः सभङ्गश्लेषद्वारा पूर्वोक्तस्य 'मयूरो नृत्यति' इत्यत्र 'मयूर' इति पदस्य, [ 'तुरगवदनो मयु' इति कोशानुसारम् ] मयो उर मयूर, तुरगवदनवक्ष', इत्यन्यमर्थं कल्पयित्वा परिहासबुद्ध्या उत्तरयति । तुरगाननवक्षस –तुरगानन -किन्नर, तस्य वक्षस उरग, नृत्य-नर्तनम्, कुत –कथमत्र सम्भवतीति, असम्भवमेतदित्यर्थ । अथ नायिका पुनरपि मदाशयतात्पर्यमनेन नावगतमिति विचिन्त्य तमबार्थं शब्दान्तरेण बोधयितुमाह—ननु–भो नाथ ! कलापिन–शिखिनम्, कथयामि–ब्रवीमि । मयूरपदेन कलापिबोधने मम तात्पर्यमित्यर्थ । भर्ता तु समर्थं जानन्नपि पुन परिहासपरतया 'कलापि' पदस्य 'क सुख लपति भाषते' इत्यर्थान्तर कल्पयित्वा उत्तरमाह—प्रिये-प्रणयिनि, इह–अस्मिन् प्रदेशे, सुखलापी-सुख मधुरं लपति भाषत इति तथा, कोऽस्ति ! क पुमान् वर्तते ! न कोऽपीत्यर्थ । एवमत्र मयूरकलापिपदयो भङ्गविभाग कृत्वा द्विरर्थकल्पनात् सभङ्गश्लेषमूला वक्रोक्तिरियम् ।

'मधुर बोलने वाला' यह अर्थ कल्पना करके पति ने फिर परिहासपूर्वक कहा-] प्रिये! यहां मधुर बोलने वाला कौन है? ॥१५॥

अभङ्गश्लेषवक्रोक्तिमुदाहरति—

**भर्तुः पार्वति! नाम कीर्त्तय न चेत्त्वां ताडयिष्याम्यहम्**
**क्रीडाब्जेन, शिवेति, सत्यमनघे! किं ते शृगालः पतिः?।**
**नो स्थाणुः, किमु कीलको, न हि पशुस्वामी, नु गोप्ता गवाम्?**
**दोलाखेलनकर्मणीति विजयागौर्योर्गिरः पान्तु वः ॥१६॥**

**अन्वयः—पार्वति! भर्तुः नाम कीर्तय न चेद् अहं क्रीडाब्जेन त्वां ताडयिष्यामि, शिवेति, अनघे! ते पतिः शृगालः, सत्यं किम्? नो, स्थाणुः, कीलकः किमु? न हि, पशुस्वामी, नु गवां गोप्ता? दोलाखेलनकर्मणि विजयागौर्योः इति गिरः वः पान्तु।**

पदार्थ—पार्वति हे गौरि! त्वं भर्तुः—निजपत्युः, नाम—अभिधानम्, कीर्तय—कथय। न चेत्—अन्यथा पतिनाम न ब्रवीषि यदि, तदा अहं—विजया, क्रीडाब्जेन—लीलाकमलेन, त्वा—भवतीम्, ताडयिष्यामि—प्रहरिष्यामि। उमा विजयाप्रश्नस्योत्तरमाह—शिवेति, 'शिव' इति मम भर्तुरभिधानमित्यर्थं। अत्र 'शिवेति' गौरीप्रत्युत्तरे 'शिव इति' 'शिवा इति' इत्युभयथा पदच्छेदसत्त्वात्, शिवापदस्य च शृगालीवाचकत्वेन तत्त क्लीत्वं निरस्य शृगालवाचकत्वं प्रस्तुतादर्थान्तरं कल्पयित्वा विजया पुनराह—अनघे-हे पुण्यशीले! ते—तव, पतिः—भर्ता, शृगालः—जम्बुकः, इति सत्य—निश्चित किम्? एवं विजयाप्रयुक्ता गौरी निजभर्तुरभिधानान्तरं पुनरभिधत्ते—नो, स्थाणुः—मम पतिः शृगालो नास्ति, अपि तु 'स्थाणु' इति मम पत्युर्नाम इत्यर्थः। अत्रापि स्थाणुशब्दस्य 'स्थाणुः कीले हरे पुमान्' इति कोश प्रमाणीकृत्य प्रस्तुत हरवाचित्व परित्यज्य, अर्थान्तर च कीलवाचित्वमाश्रित्य विजया पुनराह—किमु कीलकः! ते पतिः कीलकः—शङ्कुः, किमु? पार्वती पुनर्नामान्तरमाह—न हि, पशुस्वामी, मम भर्ता कीलको नास्ति-

अपि ॥ पशुस्वामी—पशुपतिः इति मम भर्तुर्नाम इत्यर्थः । अत्रापि पशुस्वामीति पदस्य योगशक्त्या पशूनां गवादीनां स्वामी पशुस्वामी गोप इति प्रस्तुतादर्थान्तरं कल्पयित्वा विजया पुनराह—नु—ननु किम् ? गवा—पशुविशेषाणाम्, गोप्ता—रक्षक, गोप इत्यर्थः, तव भर्त्ता ? दोलखेलनकर्मणि-दोलया खेलनं क्रीडनम्, तदेव कर्म व्यापारस्तस्मिन्, विजयागौर्यो—विजयाया पार्वतीसख्या पार्वत्याश्च, इति—एवमुक्तप्रकारा, गिर—वाचः प्रश्नोत्तररूपाः, व—युष्मान्, पान्तु—रक्षन्तु । अत्र शिवस्थाणुपशुस्वामिपदानां अभङ्गानामेवार्थान्तरप्रतिपादकत्वेन अभङ्गश्लेषमूला वक्रोक्तिरियम् ।

भावार्थ—[इस श्लोक में गौरी और उसकी सखी विजया का परिहास वार्त्तालाप है ] विजया—हे पार्वती ! अपने पति का नाम बता, नहीं तो मैं इस खेलने के कमल से तुझे मारूँगी । गौरी—मेरे पति का नाम शिव है । विजया—क्या तुम्हारा पति शिव अर्थात् शृगाल है ? गौरी—नहीं, मेरा पति स्थाणु [ महादेव ] है । विजया—क्या तुम्हारा पति स्थाणु [ कीलक ] अर्थात् ठूठ है ? गौरी—नहीं, मेरा पति पशुस्वामी [ पशुपति=महादेव ] है । विजया—क्या तुम्हारा पति पशुस्वामी अर्थात् पशुओं को पालने वाला ग्वाला है ? हिंडोले पर झूलते समय गौरी और विजया की इस प्रकार की बातचीत, आपलोगों की रक्षा करे ॥१६॥

क्रमप्राप्तमनुप्रासं लक्षयति—

तुल्यश्रुत्यक्षरावृत्तिरनुप्रासः स्फुरद्गुणः ।
अतत्पदः स्याच्छेकानां लाटानां तत्पदश्च सः ॥१७॥

अन्वय—तुल्यश्रुत्यक्षरावृत्तिः स्फुरद्गुणः अनुप्रासः । सः छेकानाम् अतत्पदः, लाटानां च तत्पदः स्यात् ।

पदार्थ—तुल्यश्रुत्यक्षरावृत्ति—तुल्या सदृशी श्रुति श्रवणं येषामक्षराणां वर्णानाम्, तेषाम् आवृत्ति पुनः पुनरावर्तनमुच्चारणं यत्र स, स्फुरद्गुण—स्फुरन्त स्फुट प्रतीयमाना गुणा औदार्यादयो यत्र तथाभूत, अनुप्रास—एतदाख्योऽलङ्कार उच्यते इति शेष । स—अनुप्रास, छेकानां—विदग्धानां चतुराणामिति यावत्, अतत्पद—तान्येव पदानि यत्र स तत्पद, न तत्पदोऽतत्पद, भिन्नपदरचित इत्यर्थ । लाटानां—लाटदेशोद्भवानां पुरुषाणां च, तत्पद—तानि पूर्वोक्तान्येव पदानि यत्र स, स्यात्—भवेत् । छेकाना चतुर॰

पुरुषाणा भिन्नै पदैर्निर्मितोऽनुप्रासो रुचिकरो भवतीति तत्रात्रैव प्रसिद्धिं गतोऽय छेकानुप्रास इति व्यवह्रियते । लाटदेशायजनेभ्यस्तु तैरेव पदै रचितोऽनुप्रासो रोचते, इत्यपरस्तत्रत्रैव लोके लाटानुप्रास इति प्रसिद्ध । एव छेकानुप्रासो लाटानुप्रासश्चेति द्विविधोऽनुप्रास इति ।

भावार्थ—जिस रचना में समान वर्णों की बार २ आवृत्ति अर्थात् उच्चारण किया जाय, तथा जहा औदार्य आदि गुण स्पष्ट प्रतीयमान हों, उसे अनुप्रास अलंकार कहते हैं। वह अनुप्रास दो प्रकार का होता है–१ छेकानुप्रास—जहा भिन्न २ पदों के होने पर भी समान श्रवण होने से अनुप्रास हो, २ लाटानुप्रास—जहा समान पद होने पर ही समान श्रवण होने से अनुप्रास हो ॥१७॥

छेकानुप्रासमुदाहरति—

अलं कलङ्कशृङ्गार ! करप्रसरहेलया ।
चन्द्र ! चण्डीशनिर्माल्यमसि न स्पर्शमर्हसि ॥१८॥

**अन्वय—कलङ्कशृङ्गार ! चन्द्र ! करप्रसरहेलया अलम्, चण्डीशनिर्माल्यम् असि, स्पर्शं न अर्हसि ।**

पदार्थ—कलङ्कशृङ्गार !–कलङ्कोऽपवादो निन्दा, शृङ्गारेण सुरतेन यस्य तत्सम्बुद्धौ तथा, गुरुपत्नीगमनरूपकलङ्कयुक्त इत्यर्थ । चन्द्र !–हे मृगाङ्क ! करप्रसरहेलया–कराणा किरणानां प्रसरस्य विस्तारस्य हेलया क्रीडया, अलं–पर्याप्तम्, अधुना मयूखप्रसारणं मा कुर्वित्यर्थ । यत एव चण्डीशनिर्माल्य–चण्डी दुर्गा, तस्या ईश पति महादेव, तस्य निर्माल्यमुच्छिष्टम्, असि–वर्तसे । अत एव स्पर्श–सम्पर्कम्, नार्हसि–कर्तुं न योग्योऽसि । 'अग्राह्य शिवनिर्माल्यम्' इति वचनादस्पृश्योऽसीत्यर्थ । अत्र पूर्वार्द्धे पदेषु भिन्नेष्वेव सत्सु लकारककाररेफाणा द्वितीयार्द्धे च चकाररकारसकाराणा पुन पुनरावृत्ते सत्त्वात् छेकानुप्रासो नामालङ्कार ।

भावार्थ—गुरुपत्नी गमन के कारण बदनाम हुए हे चन्द्र ! तू अपनी किरणों को फैलाने से बस कर, क्योंकि तू महादेव का उपभुक्त शेष [ उपभोग करने के बाद सिरसे उतारा हुआ ] है, इसलिये अस्पृश्य है ॥१८॥

लाटानुप्रासमुदाहरति—

रणे रणविदो हत्वा दानवान् दानवद्विपा ।
नीतिनिष्ठेन भूपाल ! भूरियं भूस्त्वया कृता ॥२९॥

अन्वयः—भूपाल ! दानवद्विपा नीतिनिष्ठेन त्वया रणे रणविदो दानवान् हत्वा इय भू भू: कृता।

पदार्थ —भूपाल !–हे जगद्रक्षक ! दानवद्विपा–दानवान् दनुजान् द्वेष्टि इति दानवद्विट् तेन, दैत्यशत्रुणा, नीतिनिष्ठेन–नीतौ नये षड्गुणचतुरुपायादिप्रयोगे निष्ठा स्थिति चातुर्यं वा यस्य तथाभूतेन राजनीतिनिपुणेनेत्यर्थ । त्वया–भवता कृष्णेन, रणे–सङ्ग्रामे, रणविद –युद्धकुशलान्, दानवान्–दैत्यान्, हत्वा–विनाश्य, इय–पुर प्रतीयमाना, भू–धरा, भू –रत्नाद्यादीनामुत्पादयित्री, कृता–विहिता। दैत्योपद्रवशमनेन सुखसम्पत्तिशालिनी सम्पादिता इति भाव । अत्र रणदानवभूपदानां पुनरावृत्त्या तत्पदावृत्तिमूलको लाटानुप्रास ।

भावार्थ—हे जगत् की रक्षा करने वाले कृष्ण ! दानवों के शत्रु और राजनीति में निपुण आपने, सङ्ग्राम में युद्ध कुशल दानवों को मार कर इस पृथ्वी को पृथ्वी बना दिया ! अर्थात् दैत्यों के उपद्रव का नष्ट कर के सुख और सम्पत्ति से युक्त कर दिया ॥२६॥

पादावृत्त्या लाटानुप्रासमुदाहरति—

त्वं प्रिया चेच्चकोराक्षि ! स्वर्गलोकसुखेन किम् ? ।
त्वं प्रिया यदि न स्या मे स्वर्गलोकसुखेन किम् ? ॥२०॥

अन्वय —चकोराक्षि ! त्व चेत् मे प्रिया स्या , स्वर्गलोकसुखेन किम् ? यदि त्व मे प्रिया न स्या , [ तदापि ] स्वर्गलोकसुखेन किम् ? ।

पदार्थ —चकोराक्षि !–चकोरस्याक्षिणी [illegible] अक्षिणी यस्या , तत्सम्बुद्धौ तथा, हे चकोरनने ! त्व–भवती, चेत्–यदि, मे–मम, प्रिया–प्रणयिनी, स्या –भवे , 'स्या मे' इति पदद्वय प्रथमपादेऽप्य येति । तदा स्वर्गलोकसुखेन–स्वर्गलोके निदशालये यत् सुख पीयूषपानोऽप्सर सम्भोगादिजन्य तेन, किम् ? न किमपि प्रयोजनमित्यर्थ । त्वत्सङ्गसुखापेक्षया स्वर्ग-

सुखं तुच्छमेवेति भावः। यदि त्वं मे प्रिया न स्याः, तदापि स्वर्गलोकसुखेन किम्? त्वय्यप्राप्तायां स्वर्गसुखमपि अकिञ्चित्करमेवेति भावः। अत्र 'स्वर्गलोकसुखेन किम्?' इति पादावृत्त्या लाटानुप्रासः।

भाषार्थ—हे चकोर के नेत्रों के समान नेत्र वाली! यदि तू मेरी प्रेयसी हो जाय, तो स्वर्गसुख से क्या? यदि तू मेरी प्रेयसी न हो, तो भी स्वर्गसुख से क्या प्रयोजन? ॥२०॥

छेकानुप्रासस्यान्यदुदाहरणमाह—

एकत्र पात्रे स्वकलत्रवक्त्रं
नेत्रामृतं विम्बितमीक्षमाणः।
पश्चात् पपौ सीधुरसं पुरस्तात्
ममाद कश्चिद् यदुभूमिपालः ॥२१॥

अन्वयः—कश्चिद् यदुभूमिपालः, नेत्रामृतं स्वकलत्रवक्त्रम् एकत्र पात्रे विम्बितम् ईक्षमाणः पुरस्तात् ममाद, पश्चात् सीधुरसं पपौ।

पदार्थ—कश्चित्–एकः, नाम्ना निर्देष्टुमशक्यः, यदुभूमिपालः–यदुवंशोद्भवो नृपः, नेत्रामृतं–नेत्राणां नयनानां कृते अमृतमिव पीयूषमिव आल्हादकत्वात्, किं तत्? स्वकलत्रवक्त्रं–स्वस्य आत्मनः, कलत्रस्य प्रियायाः, वक्त्रम् आननम्, एकत्र–एकस्मिन्, पात्रे–मद्यभाजने, विम्बितं–प्रतिफलितम्, ईक्षमाणः–अवलोकयन्, पुरस्तात्–मद्यपानात् पूर्वमेव, ममाद–हर्षातिशयम् उन्मादं वा प्राप, पश्चात्–पात्रप्रतिबिम्बितप्रियामुखदर्शनजनितोन्मादात् परम्, सीधुरसं–मद्यरसम्, पपौ–पीतवान्। अत्र प्रथमार्द्धे ककारतकारमकाराणां उत्तरार्द्धे च पकारसकारमकाराणां पुनःपुनरावृत्त्या अतत्पदावृत्तिनिबन्धनश्छेकानुप्रासः।

भाषार्थ—कोई यदुवंश का राजा, नेत्रों के लिये अमृतमय, अपनी प्रेयसी के मुख को, मद्यपात्र में प्रतिबिम्बित देखता हुआ, मद्यपान से पूर्व ही अतिशय हर्ष अथवा उन्माद को प्राप्त हो गया, मद्यरस को उसने बाद में पिया ॥२१॥

क्रमप्राप्तं यमकं लक्षयति—

स्यात् पादपदवर्णानामावृत्तिः संयुताऽयुता ।
यमकं भिन्नवाच्यानामादिमध्यान्तगोचरम् ॥२२॥

अन्वयः—भिन्नवाच्यानां पादपदवर्णानां संयुता अयुता आवृत्तिः यमकं स्यात्, [ तच्च ] आदिमध्यान्तगोचरम् ।

पदार्थ —भिन्नवाच्यानाम्–भिन्नम् अन्यत् पृथग्भूतं वाच्यम् अभिधेयोऽर्थो येषां तथाभूतानाम्, पादपदवर्णानाम्–पादः पद्यस्य तुरीयो भागः, पदं विभक्त्यन्तं शब्दः, वर्णा अक्षराणि, एतेषाम्, संयुता–मिलिता तुल्यपदान्तरेण संश्लिष्टा, अयुता–अमिलिता तुल्यपदान्तरेण विच्छिन्ना, आवृत्तिः–पुनरुच्चारणम्, यमकम्–तदाख्योऽलङ्कारः, स्यात्–भवेत् । तच्च यमकम् आदिमध्यान्तगोचरम्–आदौ प्रथमपादे, मध्ये द्वितीयतृतीयपादयोः, अन्ते चतुर्थपादे च, यथाक्रमं गोचरम् इन्द्रियविषयं भवतीत्यर्थः । तथा च प्रतिपादगतं यमकं भवतीति भावः । एवं पाद–पद–वर्णानां त्रयाणामावृत्तिरूपं यमकं त्रिविधम् । आवृत्तेश्च संयुतायुतत्वभेदेन द्विविधत्वात् यमकस्य षड्विधत्वम्, पुनरपि तस्य चतुष्पादगोचरत्वेन चातुर्विध्यात् चतुर्विंशतिर्भेदाः । तेषामुदाहरणान्यग्रे प्रदर्श्यन्ते ।

भावार्थ—भिन्न २ अर्थ वाले पाद पद अथवा वर्णों की, मिलित अथवा पदान्तरों से व्यवहित समान आवृत्ति को यमक कहते हैं । यह यमक, श्लोक के प्रत्येक चरण में देखा जाता है ॥२२॥

अथाद्यपादस्य संयुतावृत्तिमूलं यमकमुदाहरति—

दयां चक्रे दयाऽचक्रे ।
सतां तस्माद् भवान् नित्यम् ॥२३॥

भावार्थ—आपने कृपा की, इसी लिये सज्जनों के लिये धन वितीर्ण किया ॥२३॥

सयुतावृत्तिमूलं मध्यपादयमकमुदाहरति—

यशस्ते समुद्रान् सदारोरगारेः ।
सदारोरगारेः समानाङ्गकान्तेः ॥२४॥

अन्वय.—उरगारेः समानाङ्गकान्ते. सदारोरगारे. ते सत् यश· समुद्रान् आर ।

पदार्थ —उरगारे —उरसा वक्षसा गच्छन्तीति उरगा सरीसृपा, तेपामरे शत्रो गरुडस्य, समानाङ्गकान्ते —समाना सदृशी अङ्गकान्ति शरीरशोभा यस्य तथाभूतस्य, हेमवर्णस्येत्यर्थ । सदारोरगारे —सदा सर्वदाऽनवरत, रोर दारिद्र्य गच्छन्ति अरय शत्रवो यस्य तादृशस्य, निजप्रतापवशीकृतशत्रोरित्यर्थ । ते—तव, सत्—विद्यमान सर्वोत्कृष्ट वा, यश —कीर्ति, समुद्रान्—जलधीन्, आर—प्राप । सर्वा अपि दिशस्ते यशसा व्याप्ता इति भाव । कस्यचिद्राज्ञो यशोवर्णनमिदम् ।"अत्र द्वितीय पादस्य पदान्तराऽव्यवहिततया तृतीयपादे समानरूपेणावृत्ते सयुतावृत्तिमूल मध्यपादयमकमिदम् ।

भावार्थ—गरुड के समान सुवर्णमय कान्ति वाले, सदा ही शत्रुओं को दरिद्र बनाने वाले, आपका उत्कृष्ट यश समुद्रों तक पहुंच गया है ॥२४॥

संयुतावृत्तिमूलम् अन्तपादयमकमुदाहरति—

द्विषामुद्धतानां निहंसि त्वमिन्द्र ! ।
मुदं भो धराणामुदम्भोधराणाम् ॥२५॥

अन्वय.—भो इन्द्र ! त्वम् उदम्भोधराणाम् उद्धतानां द्विषां धराणां मुद निहंसि ।

पदार्थ —भो इन्द्र !—हे देवराज !, त्वम्, उदम्भोधराणाम्—उदुपरि शृङ्गेषु एकत्रीभूता अम्भोधरा मेघा येषा तथाभूतानाम्, उद्धताना—पक्षशालित्वेनातिशय गर्वितानाम्, पूर्वं पर्वतानामपि पक्षा आसन् इति पौराणिका । अत एव द्विषा—शत्रूणामुपद्रवकारित्वाद् विरोधिभूतानामित्यर्थ । धराणा—धरन्तीति धरा पर्वतास्तेषाम्, मुद—दर्पम्, निहंसि—नाशयसि । इन्द्रो हि पर्वत-

परशुराम जी की शोभा को मात कर दिया है, प्रत्येक समय में दीप्ति को प्राप्त हो रही है ॥२६॥

अथायुतावृत्तिमूलमादिमध्यपादयमकमुदाहरति—

सारं गवयसान्निध्यराजि काननमग्रतः।
सारङ्गवयसां निध्यदारुणं शिखरे गिरेः ॥२७॥

अन्वयः—गिरेः अग्रतः शिखरे सारं गवयसान्निध्यराजि सारङ्गवयसां निधि अदारुणं काननम्।

पदार्थ —गिरे –पर्वतस्य, अग्रत –अग्रवर्त्तिनि पुरो दृश्यमाने, शिखरे–सानौ–शृङ्गे, सार–प्रधानभूतम्, अत्युत्कृष्टमित्यर्थ। गवयसान्निध्यराजि–गवयानां गोसदृशवन्यपशुविशेषाणां सान्निध्येन सन्निधानेन संसर्गेण सहवासेन वा राजत शोभत इति तथा। सारङ्गवयसा–सारङ्गाणां मृगविशेषाणां वयसा विविधपक्षिणां च, निधि–आश्रयभूतम्, निरुपद्रवनिवसतिस्थानमित्यर्थ। अदारुण–न दारुण भयावहमिति तथा, रम्यमाकर्षकमित्यर्थ। कानन-वनम्, वर्तत इति शेष। अत्र प्रथमपादस्य तृतीयपादे समानत्वेनावृत्तेरपि द्वितीयपादेन व्यवहितत्वाद् अयुतावृत्तिमूलं प्रथमतृतीयपादगोचरं यमकमिदम्।

भावार्थ—पहाड़ की सामने की चोटी पर, बहुत बड़ा, नील गायों से सुशोभित, मृग और पक्षियों का खजाना, अति मनोहर बन, विद्यमान है ॥२७॥

अयुतावृत्तिमूलमाद्यन्तपादयमकमुदाहरति—

आसन्नदेवा न रराज राजि-
रुच्चैस्तटानामियमत्र नाद्रौ।
क्रीडाकृतो यत्र दिगन्तनागा
आसन् नदे वानरराजराजिः ॥२८॥

अन्वयः—अत्र अद्रौ आसन्नदेवा वानरराजराजिः इयम् उच्चैस्तटानां राजिः न न रराज, यत्र नदे दिगन्तनागा क्रीडाकृत आसन्।

पदार्थ —अत्र–अस्मिन्, अद्रौ–पर्वते, आसन्नदेवा–आसन्ना समीपवर्त्तिनो देवा इन्द्रादयो यस्यास्तथाभूता, वानरराजराजि –वानराणां कपीनां राजान मुख्या वानरराजा, तेषां राजि श्रेणी समूहो यत्र तथाभूता, इयम्–अग्रतो

दृश्यमाना, कस्यचिन्नदविशेषस्य उच्चैस्तटानाम्—उन्नततीरप्रदेशानाम्, राजि·पङ्क्ति, न न रराज—नन्द्वयग्रहणाद् अवश्यमेव शुशुभ इत्यर्थः। यत्र-यस्मिन् उन्नततीरप्रदेशशोभावति, नदे—वारिप्रवाहविशेषे, दिगन्तनागा—दिग्गजा, क्रीडाकृत—क्रीडाकारिण, आसन्—अविद्यन्त। अत्र प्रथमपादस्य चतुर्थपादे समानत्वेनावृत्ते द्वितीयतृतीयपादव्यवधानाद् अयुतावृत्तिमूलमाद्यन्तपादयमकमिदम्।

भावार्थ—इस पहाड़ पर, जहां समीप ही देवता निवास करते हैं, और बड़े २ बन्दरों के झुण्ड रहते हैं, किसी नद विशेष के ऊंचे किनारों की पंक्ति बहुत ही सुशोभित हो रही है, जिस नद में दिग्गज क्रीडा किया करते थे ॥२८॥

अयुतावृत्तिमूलं द्वितीयचतुर्थपादगतं यमकमुदाहरति—

अमरनगरस्मेराक्षीणां प्रपञ्चयति स्फुर-
त्सुरतरुचये कुर्वाणानां धलक्षम! रंहसम्।
इह सह सुरैरायान्तीनां नरेश! नगेऽन्वहं

त्वेनावृत्तेस्तृतीयपादेन व्यवधानाद् अयुनावृत्तिमूलं द्वितीयचतुर्थपादगोचरं यमकमिदम्।

भावार्थ—अतिशय पराक्रमी हे राजन्! अनेक कल्पवृक्षों से सुशोभित इस पहाड़ पर ताल नामक वृक्षों से घिरा हुआ भूप्रदेश, प्रतिदिन सम्भोग सुख के लिये देवों के साथ आती हुई तथा अतिशय अट्टहास करती हुई अप्सराओं के वेग को स्पष्ट प्रकट कर रहा है ॥२६॥

सर्वपादानां समानावृत्तौ महायमकमुदाहरति—

रम्भाऽऽरामा कुरवक! कमला-
रम्भा रामा कुरवककमला।
रम्भारामाऽकुरवककमलाऽ-
रम्भाऽऽरामाऽकुरवककमला ॥३०॥

अन्वयः—अयक! रम्भाऽऽरामा कमलारम्भा रामा कुरवककमला रम्भारामा अकु. अयककमला अरम्भारामा अकुरवककमला क [ वर्तते. शोभते वा ]।

विशेषा यत्र सा, कु -भूमि , वर्तते शोभते वा इति शेष । अत्र प्रथमपाद- स्यैव पुन पुनरावृत्ते महायमकमिदम् ।

भावार्थ—हे पालन करने वाले ! केलों के उपवन से युक्त, भ्रमरों से भरी हुई तथा सुशोभित, कुरवक नामक वृक्षों के कारण अति रमणीक, रम्भा नामक अप्सरा के सदृश सुन्दरियों से व्याप्त, अति प्रशंसनीय, बगुलों से रहित जल वाली ( बगुले आम तौर पर थाडे और गन्दे जल में ही बसर करते हैं । इसलिए 'बक रहित' से अभिप्राय 'गम्भीर और स्वच्छ जल वाली' है ), अत्यधिक शोभाओं से सुरम्य, तथा मधुर शब्द करने वाले हरिणों से व्याप्त यह भूमि सुशोभित हो रही है । [ किसी विशेष भूप्रदेश का यह वर्णन है ] ॥३०॥

पादयमकानि यथायथ निरूप्य, अधुना संयुताशृङ्खिमूलमादि- पदयमकमुदाहरति—

हारीतहारी ततमेव धत्ते
शेवालसेवालसहंसमम्भः ।
जम्बालजं बालमलं दधानं
मन्दारमन्दारवयायुरद्रिः ॥३१॥

अन्वय—हारीतहारी मन्दारमन्दारवयायु· एष अद्रिः ततं शेवालसेवालसहंसं बालं जम्बालजम् अलं दधानम् अम्भः धत्ते ।

लम्, निर्भररूपं सरोरूपं वा धत्ते-धारयति। अत्र प्रत्येकस्मिन् पादे हारीता-दीना पदानामावृत्ते पदान्तराव्यवहिततया सयुतावृत्तिमूलआदिपदयमक-मिदम्। यद्यपि द्वितीयपादे तालव्यदन्त्ययोर्भेद, तथापि शसयोरभेदाङ्गी-कारेण नाय दोष। अथवा 'शेवाल' पर्याय 'सेवाल' शब्द एवाङ्गीकार्य।

भावार्थ—हारीत नामक पक्षियों से मनोहर, तथा मन्दार वृक्षों से मधुर एव धीरे २ उठते हुए शब्द वाले वायु से युक्त यह सामने दीखता हुआ पहाड़ सिवाल के बीच में धीरे २ चलने वाले हंसों से युक्त, तथा नये कमलों से अच्छी तरह सुशोभित विस्तृत जल को धारण कर रहा है॥३९॥

संयुतावृत्तिमूलं मध्यपदयमकमुदाहरति—

नेमिर्विशालनयनो नयनोदितश्री-
रभ्रान्तबुद्धिविभवो विभवोऽथ भूयः।
प्राप्तस्तदेति नगरान्नगराजि तत्र
सूतेन चारु जगदे जगदेकनाथः॥४२॥

अन्वयः—अथ विशालनयनः नयनोदितश्रीः अभ्रान्तबुद्धि-विभवः विभवः जगदेकनाथः नेमिः नगरात् तत्र नगराजि [यदा] प्राप्तः, तदा सूतेन चारु भूयः इति जगदे।

पदार्थ—अथ-अनन्तरम्, विशालनयन—विशाले अतिदीर्घे नयने नेत्रे यस्य स, कमलनेत्र इत्यर्थ। अत एव नयनोदितश्री—नयनाभ्यां नेत्राभ्याम् उदिता प्रकटीभूता श्री शोभा यस्य स। अथवा नयेन नीत्या राजनीति मार्गेण नोदिता प्रेरिता प्रकाशिता वा श्रीर्यस्य स, न्यायाधिकशोभ इत्यर्थ। अभ्रान्तबुद्धिविभव—अभ्रान्तो भ्रान्तिरहित बुद्धे ज्ञानस्य विभव सामर्थ्यं यस्य तथाभूत, तत्त्वज्ञानवानित्यर्थ। विभव—विगतो नष्टो भव संसारो यस्य स, संसारवासनाशून्यत्वेन जीवन्मुक्त इत्यर्थ। जगदेकनाथ—जगतां पृथि-व्यादिगतलोकानाम्, एक अनन्यो नाथ पति, नेमि—तदाख्यो महापुरुषो जैनाचार्य, नगरात्-पुरात्, स्वनिवासनिस्थानादित्यर्थ। तत्र—तस्मिन् काले नगराजि—महाशैले रैवतकनाम्नि, यदा प्राप्त—समुपगत, तदा तस्मिन् काले सूतेन—सारथिना, चारु—शोभन यथा स्यात् तथा, भूय—पुन पुन, इति—इत्थ वक्ष्यमाणप्रकारेण, जगदे—कथित। अत्र 'नयन—विभव—नगर—जगदे' इति

पदानां पादमध्यगतानामावृत्ते पदान्तरेणाव्यवधानात् संयुतावृत्तिमूलं मध्यपदगोचरं यमकमिदम् ।

भावार्थ—बड़े २ नेत्रों वाला, अतएव नेत्रों से प्रकाशित विशेष शोभा से युक्त, अथवा नीति या न्याय से विस्तृत शोभा वाला, तत्वज्ञानी, संसार वासनाओं से शून्य, लोकों का स्वामी, नेमि नामक महात्मा, अपने निवास स्थान से, उस रैवतक महाशैल पर जब पहुंचा, उस समय सारथी ने बहुत अच्छी तरह बार २ उन्हें यह कहा ॥२२॥

संयुतावृत्तिमूलमन्तपदयमकमुदाहरति—

यदुपान्तिकेषु सरलाः सरला
यदनूच्चलन्ति हरिणा हरिणाः ।
तदिदं विभाति कमलं कमलं
मुदमेत्य यत्र परमाप रमा ॥२३॥

अन्वयः—यदुपान्तिकेषु सरलाः सरलाः, यदनु हरिणाः हरिणा उच्चलन्ति, यत्र रमा कमलम् एत्य परं मुदम् आप तत् इदं कमलं विभाति ।

अथायुतावृत्तिमूलं पादादिगोचरं पद्यमकमुदाहरति—

> कान्तारभूमौ पिककामिनीनां
> 
> कां तारवाचं क्षमते स्म सोढुम् ।
> 
> कान्ता रतेशेऽध्वनि वर्तमाने
> 
> कान्तारविन्दस्य मधोः प्रवेशे ॥२४॥

अन्वयः—कान्ता रतेशे अध्वनि वर्तमाने, कान्तारविन्दस्य मधोः प्रवेशे कान्तारभूमौ पिककामिनीनां कां तारवाचं सोढुं क्षमते स्म ।

पदार्थ—कान्ता-कामिनी, रतेशे-भर्तरि, अध्वनि-मार्गे, वर्तमाने गतवति प्रोषिते इति यावत्, विदेशस्थे सतीत्यर्थः । कान्तारविन्दस्य-कान्तानि विकसिततया कमनीयानि अरविन्दानि कमलानि यत्र तथाभूतस्य, मधोः-चैत्रस्य वसन्तस्येति यावत्, प्रवेशे-आगमे, प्रारम्भे सति, कान्तारभूमौ-वनप्रदेशे, पिककामिनीनां-कोकिलानाम्, कां-कतमाम्, तारवाचम्-उच्चैः स्वरेणोच्चारितां मनोहारिणीं वाणीम्, सोढुं-मर्षितुम्, क्षमते स्म-शक्नोति स्म ? कामपीत्यर्थः । कामिन्याः पतिवियोगेन कोकिलवाचश्चेतोदुःखकारिण्य एवासन्, अत सोढुमशक्या इति भावः । अत्र प्रतिपादादौ कान्तारपदावृत्तेः पदान्तरव्यवधानाद् अयुतावृत्तिमूलं पादादिगोचरं पद्यमकमिदम् ।

भावार्थ—कामिनी, पति के विदेश चले जाने पर, कमनीय कमलों से परिपूर्ण वसन्त के आरम्भ में, जंगल में बोलती हुई कोयलों की किस कूक को सहन कर सकी ? [ अर्थात् किसी को नहीं ] ॥२४॥

अयुतावृत्तिमूलं पादमध्यगतं पद्यमकमुदाहरति—

> चकार साहसं युद्धे धृतोल्लासा हसं च या ।
> 
> दैन्यं त्वां साह संप्राप्ता द्विषां सोत्साह ! सन्ततिः ॥२५॥

अन्वयः—सोत्साह ! या धृतोल्लासा द्विषां सन्ततिः युद्धे साहसं हसं च चकार, सा त्वां संप्राप्ता दैन्यम् आह ।

पदार्थ—सोत्साह !—उत्साहेन पराक्रमोद्यमेन सह वर्तत इति सोत्साहः तत्सम्बुद्धौ तथा, हे पराक्रमशील ! भूपाल ! इति शेषः । या, धृतोल्लासा—अन्यत्र विजयेन धृतोऽङ्गीकृत उल्लासो हर्षो यया तथाभूता, अन्यत्र जयस्त-

मेन दृष्टा इति भाव । द्विषा–शत्रूणाम्, सन्तति–श्रेणी, युद्धे–सग्रामाङ्गणे, साहस–शस्त्रादिचालनेन स्वबलप्रकाशम्, हस–हास्यञ्च, मिथो हर्षातिरेकेणे त्यर्थ । चकार–विदधौ, सा–द्विषा सन्तति, त्वा–भवन्त ततोऽपि शक्तिशालिनम्, सप्राप्ता–रणकरडूत्यपनिनीषया समागता सती, दैन्य–दीनतामेव भवदधीनतामेव आह–प्रार्थयामासेत्यर्थ । अत्र प्रतिपादमध्यगतस्य 'साहस' इति पदस्यावृत्ते पदान्तरव्यवधानाद् अयुतावृत्तिमूल पादमध्यपदयमकमिदम् ।

भावार्थ—हे उत्साहशील महाराज ! जिन शत्रुओं ने दूसरी जगह अत्यन्त हर्षातिरेक से युद्ध में साहस दिखलाया और परस्पर उल्लास प्रकट किया था, वे ही शत्रु, आपके सामन पहुंच कर दीन वचन बलने लगे ॥३५॥

अयुतावृत्तिमूल पादान्तपदयमकमुदाहरति—

गिरां श्रूयते कोकिला कोविदारं
यतस्तद्वनं विस्फुरत्कोविदारम् ।
मुनीनां वसत्यत्र लोको विदारं
न च व्याधचक्रं कृतौको विदारम् ॥३६॥

अन्वय—अत्र गिराम् अर कोविदा कोकिला श्रूयते, यत तद् वन विस्फुरत्कोविदारम्, मुनीना लोको विदार वसति, विदार व्याधचक्र च कृतौको न ।

पदार्थ—अत्र–अस्मिन् वन, गिरा–वाणीना विषये, तासा कोमलत्वे माधुर्ये वा, अरम्–अतिशय कोविदा–पण्डिता, सुकोमलवागुच्चारणे निसर्गत एव चतुरा, कोकिला–पिककामिनी श्रूयते–आकर्ण्यते, जनैरिति शेष । यत यस्मात् कारणात्, तद्–प्रसिद्ध कोकिलाद्युपेतम्, वन–काननम्, विस्फुरत्कोविदार–विस्फुरन्त विकसन्त कोविदारा काञ्चनारापरनामधेया 'कचनार' इति भाषाया प्रसिद्धा, तरुभेदा यत्र तादृशम् कोकिला कोविदारप्रिया भवतीति प्रसिद्धेस्तत्र तन्निवास सगत एव । किञ्च मुनीना–मौनव्रतशीलाना तपस्विनाम्, लोक–समुदाय, विदार–विगता दूरीभूता दारा कलत्राणि यत्र निवसने तद् विदार–भार्यारहित यथा स्यात् तथा, वसति–निवास करोतीत्यर्थ । तथा विदार–वीन् खगान् दारयति नाशयतीति विदार पक्षिविनाशकम्, व्याधचक्र–किरातसमूहश्च, कृतौक–कृत विहित ओक स्थान येन

तादृशम्, न—अस्तीति शेष । अत्र प्रतिपादान्ते 'कोविदार' इति पदस्यावृत्ते पदान्तरव्यवधानाद् अयुतावृत्तिमूल पादान्तगोचर पदयमकमिदम् ।

भावार्थ—इस वन में, वाणी की कोमलता और मधुरता में अत्यन्त चतुर कोयल सुनी जाती है । क्योंकि इस वन में फूले हुए कचनार बहुत हैं । तथा स्त्री आदि से रहित मुनियों का समुदाय यहां रहता है । और पक्षियों को मारने वाले बहेलिये यहां पर घर बनाकर नहीं रहते ॥३६॥

**अयुतावृत्तिमूलं प्रतिपादाद्यार्धभागगोचरं पदयमकमुदाहरति—**

'सिन्धुरोचितलताग्रशल्लकी-
सिन्धुरोचितमुपेत्य किन्नरैः ।
कन्दराजितमदस्तटं गिरेः
कन्दराजितगृहश्रि गीयते ॥३७॥

**अन्वय—किन्नरै: सिन्धुरोचितलताग्रशल्लकीसिन्धुरोचितं कन्दराजित कन्दराजितगृहश्रि अद गिरेः तटम् उपेत्य गीयते।**

पदार्थ —किन्नरै -किम्पुरुषै देवयोनिविशेषै , सिन्धुरोचितलताग्रशल्लकीसिन्धुरोचित-सिन्धुराणा गजानाम् उचिता योग्या भक्षणार्हा लता ताभ्योऽग्रे प्रथम यासा तथाभूता या शल्लक्य गजभक्ष्यतृणविशेषा यासु तादृश्यो या सिन्धवा नद्य ताभि रोचित शोभितम्, कन्दराजित—कन्दै मूलविशेषै राजित शोभितम्, कन्दराजितगृहश्रि—कन्दराभि गुहाभि जिता तिरस्कृता गृहाणां निकेतनाना श्री शोभा येन तथाविधम्, अद —इद पुरतोऽवलोक्यमानम्, गिरे —पर्वतस्य, तट—प्रान्तभागम्, उपेत्य—प्राप्य गीयते—गान क्रियत इत्यर्थ । अत्र आद्ययो पादयो 'सिन्धुरोचित' इति पदद्वयावृत्ते अन्त्ययोश्च पादयो 'कन्दराजित' इति पदद्वयावृत्ते पदान्तरव्यवधानाद् अयुतावृत्तिमूल प्रत्यर्द्धभाग भिन्न पादादिपदयमकमिदम् ।

भावार्थ—किन्नर, हाथियों के खाने योग्य लताओं में श्रेष्ठ सल्लकी से घिरी हुई नदियों से सुशोभित, विविध कन्दों से परिपूर्ण तथा बड़े २ मकानों की शोभा को भी लज्जित करने वाली गुहाओं से युक्त, इस पहाड़ के प्रान्तभाग में आकर, गीत गाते हैं ॥३७॥

अयुतावृत्तिमूलं प्रत्यर्द्धभागं भिन्नं पादमध्यगोचरं पदयमकमुदाहरति—

वसन् सरोगोऽत्र जनो न कश्चित्
परं सरोगो यदि राजहंसः ।
गीतं कलं को न करोति सिद्धः
शैले कलङ्कोज्झितकाननेऽस्मिन् ॥२८॥

अन्वयः—कलङ्कोज्झितकानने अत्र शैले वसन् कश्चित् जनः सरोगो न, परं यदि सरोगः राजहंसः, अस्मिन् [ शैले ] कः सिद्धः कलं गीतं न करोति ? ।

पदार्थ—कलङ्कोज्झितकानने-कलङ्कैः नगरवर्तिदोषैः मलिनत्वादिभिः उज्झितं विवर्जितं काननं वनं यस्मिन् तथाभूते, अतिपवित्रपवननिर्मलसलिलशालितया स्वास्थ्यकरे इत्यर्थः । अत्र-अस्मिन् पुरतो दृश्यमाने, शैले-पर्वते, वसन्-निवासं कुर्वन्, कश्चित्-कोऽपि, जनः-पुरुषः, सरोगः-व्याधिना सहितः, न-न भवतीत्यर्थः । परं-किन्तु, यदि-चेत्, सरोगः-सरो मानसं सरोवरं गच्छतीति सरोगः कश्चिदस्ति, तर्हि राजहंसः-मराल एव । किञ्च अस्मिन्-अत्र शैले, कः-कतमः, सिद्धः-देवयोनिविशेषोऽस्ति, यः कलं-मनोहरम्, गीतं-गानम्, न करोति-न विदधाति ? अपि तु सर्व एव सिद्धः सुन्दरं गानं करोतीत्यर्थः । अत्र पूर्वार्द्धे सरोगपदावृत्तेः उत्तरार्द्धे च कलङ्कपदावृत्ते पदान्तरव्यवधानात् पादमध्यगतत्वाच्च अयुतावृत्तिमूलं पादमध्यगोचरं पदयमकमिदम् ।

भावार्थ—मलिनतादि दोषरहित जंगलों से परिपूर्ण इस पर्वत पर निवास करता हुआ कोई भी पुरुष सरोग ( रोगी ) नहीं, किन्तु राजहंस सरोग (मानस सरोवर को जानेवाला ) अवश्य होता है । और इस पर्वत पर कौन सा सिद्ध सुन्दर गीत नहीं गाता है ॥२८॥

अयुतावृत्तिमूलं प्रत्यर्द्धभागं भिन्नं पादान्तपदयमकमुदाहरति—

जहुर्वसन्ते सरसीं न वारणाः
बभुः पिकानां मधुरा नवा रवाः ।

रसं न का मोहनकोविदाऽऽर कं
विलोकयन्ती वकुलान् विदारकम् ॥३९॥

अन्वयः—वसन्ते वारणाः सरसीं न जहुः, पिकानां मधुरा नवा रणा बभुः, मोहनकोविदा का वकुलान् विलोकयन्ती विदारकं कं रसं न आर ? ।

पदार्थ —वसन्ते-सुरभिसमये, वारणा —गजा , सरसी-महासरोवरम्, न जहु —न परितत्यजु , पिकाना-कोकिलानाम्, मधुरा —मनोहारिण , नवा —नवाना प्रतिक्षण जायमाना , रणा —सुन्दररवा , बभु —रराजिरे, मोहनकोविदा-मोहने चित्ताकर्षणे कोविदा पण्डिता, सुरतचतुरा इत्यर्थ । का-कतमा नारी, वकुलान्-सुरभिपुष्पयुतान् तरुविशेषान्, विलोकयन्ती—पश्यन्ती सती, विदारक-मनोव्यथाकरम्, क-कतमम्, रस-शृङ्गारविप्रलम्भादिरूपम्, न आर—नानुबभूव ? अपि तु वियोगिनी सा सर्वं विप्रलम्भायनुगुणा सन्तापादिक प्रापेत्यर्थ । अत्र पूर्वार्धे 'न वारणा' इति पदावृत्ते, उत्तरार्धे च 'विदारकम्' इति पदावृत्ते पदान्तरव्यवधानात् पादान्तगोचरत्वाच्च अयुतावृत्तिमूल प्रत्यर्धभाग भिन्न पदान्तपदयमकमिदम् ।

भावार्थ—वसन्त समय में, हाथियों ने बड़े तालाबों को नहीं छोड़ा, कोयलों के मीठे और नये शब्द बराबर होते रहे, मनों को आकर्षण करने वाली किस नारी ने, मौलसरी के वृक्षों को देखते हुए, हृदयविदारक किस रस का अनुभव नहीं किया ? ॥३९॥

अयुतावृत्तिमूलं प्रतिपादमाद्यन्तपदयोर्यमकमुदाहरति—

वरणाः प्रसूननिकरावरणा
मलिनां वहन्ति पटलीमलिनाम् ।
तरवः सदाऽत्र शिखिजातरवः
सरसश्च भाति निकटे सरसः ॥४०॥

अन्वयः—अत्र प्रसूननिकरावरणा वरणाः तरवः मलिनाम् अलिनां पटलीं सदा वहन्ति, सरसश्च निकटे सरसः शिखिजातरवः भाति ।

पदार्थ —अत्र—अस्मिन् महाशैले, प्रसूननिकरावरणा —प्रसूनाना कुट

माना निकर समूह एव आवरणम् आच्छादन येषा तथाभूता, वरणा–कुमारकनामान, तरव–पादपा, मलिना–श्यामवर्णाम्, अलिना–मधुलिहाम्, पटला–श्रेणिम् सदा–सर्वस्मिन् काले, अनवरत वा, वहन्ति–धारयन्ति, सरसश्च–सरोवरस्य च, निकटे–समीपे, सरस–रसेन सहित, मधुर इत्यर्थ । शिखिजातरव–शिखीना मयूराणा जात समूह, तस्य रव शब्द, अथवा शिखिभ्यो जाता शिखिजाता मयूरशिशव, तेषा रव शब्द केकावाणीत्यर्थ । भाति–शोभते । अत्र प्रतिपाद 'वरणा–मलिना–तरव–सरस' इत्येतेषा पदानामावृत्ते पदान्तरव्यवधानाद् अयुतावृत्तिमूल आद्यन्तपदयमकमिदम् ।

भावार्थ—इस बडे पहाड पर फूलों से लदे हुए वरण नामक वृक्ष, काली भौंरों की पंक्ति को धारण कर रहे हैं । और तालाब के किनारे मोरों का सुन्दर शब्द सुहावना मालूम हो रहा है ॥४०॥

**अयुतावृत्तिमूलं पद्यार्द्धान्त्यपदयमकमुदाहरति—**

**यथा यथा द्विजिह्वस्य विभवः स्यान्महत्तमः ।**

**तथा तथास्य जायेत स्पर्द्धयेव महत्तमः ॥४१॥**

**अन्वय—द्विजिह्वस्य विभव यथा यथा महत्तम स्यात्, तथा तथा अस्य तमः स्पर्द्धया इव महत् जायेत ।**

पदार्थ—द्विजिह्वस्य–द्वे परोक्षापरोक्षयो निन्दास्तुतिपरे जिह्वे रसने यस्य तस्य सूचकस्य, प्रत्यक्ष परोक्ष चान्यथाभाषिणा दुर्जनस्येति यावत्, विभव–धनमैश्वर्यं वा, यथा यथा–यावत्, यया मात्रया, महत्तम अतिशयेन प्रचुर, बहुतर, स्यात्–भवेत्, तथा तथा–तावदेव, तयैव मात्रया, अस्य–दुर्जनस्य, तम–मोह सावलेपत्व वा, स्पर्द्धया–ईर्ष्यया इव, महत्–उत्कृष्टमधिकम्, जायेत–सम्पद्येत । अत्र पूर्वार्द्धान्त्यस्य 'महत्तम' इति पदस्य उत्तरार्द्धान्ते आवृत्ते पदान्तरव्यवधानाद् अयुतावृत्तिमूलम् अर्द्धान्त्यपदयमकमिदम् ।

भावार्थ—दुर्जन का ऐश्वर्य जैसे २ बढ़ता जाता है, वैसे ही वैसे उसका मोह [अज्ञान] या घमण्ड भी [धन की] ईर्ष्या से मानों, बढ़ता ही जाता है ॥४१॥

संयुताऽयुतोभयावृत्तिमूलं पादादिपदयमकमुदाहरति—

दास्यति दास्यतिकोपादास्यति सति कर्करान् शापम्।
भवति भवति ह्यनर्थो भव तिमितस्तेन वटुक ! त्वम् ॥४२॥

अन्वयः—वटुक ! भवति कर्करान् आ+अस्यति सति दासी अतिकोपात् शापं दास्यति, हि अनर्थो भवति, तेन त्वं तिमितो भव।

पदार्थः—वटुक !—हे बालक ! भवति—श्रीमति त्वयि, कर्करान्—प्रस्तरखण्डान् मृद्घटखण्डान् वा, आ—समन्तात्, अस्यति—क्षिपति सति, दासी—परिचारिका, अतिकोपात्—अधिकक्रोधवशात्, शापम्—आक्रोशं गालिशब्दान्, दास्यति—वदिष्यति, हि—यस्मात्, शापाच्च, अनर्थः—अनिष्टम्, भवति—जायते, तेन—कारणेन, त्वम्, तिमितः—शान्तः स्थिरः, भव—जायस्व, यथाशक्यं चापल्यं परित्यजेत्यर्थः। अत्र 'दास्यति' 'भवति' इति पदयोरावृत्तेः पदान्तरेण व्यवधानादव्यवधानाच्च संयुताऽयुतोभयावृत्तिमूलं पादादिगोचरं पदयमकमिदम्।

भावार्थ—हे बालक ! तुम्हारे, पत्थर या खिपड़े फेंकने पर नौकरानी अत्यन्त क्रोध से तुम्हें गालियां देगी, क्योंकि गालियां खाना बहुत बुरी बात है, इसलिए तुम शान्त हो जाओ [अर्थात् पत्थर आदि फेंकने की चपलता को छोड़ दो] ॥४२॥

संयुताऽयुतावृत्तिमूलं मध्यपादगतं पदयमकमुदाहरति—

कुलं तिमिभयादत्र करेणूनां न दीव्यति।
नदीव्यतिकरेऽणूनां प्राणिनां गणनापि का ? ॥४३॥

अन्वयः—अत्र नदीव्यतिकरे करेणूनां कुलं तिमिभयात् न दीव्यति, अणूनां प्राणिनां गणना अपि का ?।

पदार्थः—अत्र—अस्मिन् पुरतो दृश्यमाने, नदीव्यतिकरे—सरित्सङ्गमे, करेणूना—गजानाम्, कुलं—वृन्दम्, तिमिभयात्—तिमिर्महामत्स्यः, तस्माद् भयं भीतिः, ततो हेतोरित्यर्थः। न दीव्यति—न क्रीडति, स्वैरं जलक्रीडां न करोतीत्यर्थः। अणूनां—क्षुद्राणां गजापेक्षयाऽतिन्यूनशक्तिमताम्, प्राणिनां—जन्तूनाम्, गणना—कथा अपि, का—कीदृशीत्यर्थः, यत्र महतामपि क्रीडावि-

च्छेद, का कथा तत्र क्षुद्राणामिति भाव । अत्र 'न दीव्यति' इति द्वितीयपादगतस्य पदस्य तृतीयपादे आवृत्ते पदान्तराव्यवधानात्, 'करेणूनाम्' इति पादावृत्तेश्च पदान्तरव्यवधानात् संयुताऽयुतोभयावृत्तिमूल मध्यपादगोचर पदयमकमिदम् ।

भावार्थ—यहा नदी सगम में हाथियों का झुण्ड तिमि नामक महामत्स्य के डर से जलक्रीडा नहीं करता। फिर छोटे प्राणियों की तो गिनती ही क्या? ॥४३॥

संयुतावृत्तिमूलं वर्णयमकमुदाहरति—

गाङ्गाम्बुधवलाङ्गाभो मुमुक्षुध्यानगोचरः ।
पापार्तिहरणायास्तु स सज्ज्ञानो जिनः सताम् ॥४४॥

अन्वय—गाङ्गाम्बुधवलाङ्गाभ मुमुक्षुध्यानगोचर सज्ज्ञानः सः जिनः सतां पापार्तिहरणाय अस्तु ।

पदार्थ—गाङ्गाम्बुधवलाङ्गाभ –गङ्गाया सुरसरित [redacted] गाङ्ग यद् अम्बु सलिल तदिव धवला सिता अङ्गाना शरीरावयवाना करचरणाननादीना आभा कान्ति शोभा यस्य तथाभूत, मुमुक्षुध्यानगोचर –मुमुक्षूणां निर्वाणार्थिना योगिना ध्यानस्य प्रत्ययैकतानताया समाधेर्वा गोचर विषय, योगिसमाधिगम्य इत्यर्थ, सज्ज्ञान –सत् समीचीन सर्वोत्कृष्ट वा ज्ञान बोधो यस्य स, 'सज्ञान' इति पाठे ज्ञानेन आत्मसाक्षात्कारेण सहित, साक्षात्कृतात्मस्वरूप इत्यर्थ, स –प्रसिद्ध, जिन –जैनसम्प्रदायप्रवर्तको देव, सतां–सज्जनानाम्, पापार्तिहरणाय–दुष्कृतक्लेशनाशाय, अस्तु–भवतु । अत्र 'गा–मु–पा–स' इत्येतेषां वर्णाना क्रमेण चतुर्णां पादानामादावावृत्ते वर्णान्तराव्यवधानात् संयुतावृत्तिमूल पादादिगोचर वर्णयमकमिदम् ।

भावार्थ—गगा के जल के समान शुभ्रकान्ति वाले, मोक्षार्थी योगियों की समाधिद्वारा जानने योग्य, उत्तम ज्ञान वाले अथवा आत्मज्ञानी प्रसिद्ध 'जिन' देव, सज्जनों के पापजन्य दुःख का नाश करने वाले हों ॥४४॥

अयुतावृत्तिमूलं वर्णयमकमुदाहरति—

जगदात्मकीर्तिशुभ्रं जनयन्नुद्दामधामदोःपरिघः ।
जयति प्रतापपूषा जयसिंहः क्ष्माभृदधिनाथः ॥४५॥

अन्वयः—उद्दामधामदोःपरिघः प्रतापपूषा क्ष्माभृदधिनाथः जयसिंहः जगत् आत्मकीर्तिशुभ्रं जनयन् जयति।

पदार्थ —उद्दामधामदो परिघ -उद्दामम् अत्युत्कृष्टम् उत्कट वा धाम तेज सामर्थ्य यस्य, एवभूतो यो दो भुज, स एव परिघ अर्गल यस्य तादृश, अतिशयबलवत्तया शत्रुप्रतिरोधसमर्थबाहुमानित्यर्थ। प्रतापपूषा-प्रतापेन तेजसा कोशदण्डजेन, पूषा सूर्य, तेजसा सूर्यसम इत्यर्थ। क्ष्माभृदधिनाथ — क्ष्माभृतामन्येषा राज्ञाम् अधिनाथोऽधिपति, राजाधिराज इत्यर्थ। जयसिंह –इति नाम्ना लोके प्रसिद्धो महाराज, जगत्–त्रिभुवनम्, आत्मकीर्तिशुभ्रम्–आत्मनो निजस्य कीर्तिभि यशोभि शुभ्र सितम्, जनयन्–कुर्वन्, जयति–सर्वोत्कर्षेण वर्तत इत्यर्थ। अत्र प्रतिपादादौ 'ज' वर्णस्यावृत्ते, तृतीयचतुर्थपादादौ च 'जय' इति वर्णद्वयस्यावृत्ते वर्णान्तरव्यवधानाद् अयुतावृत्तिमूल वर्णयमकमिदम्।

भावार्थ—अनुपम बल युक्त भुजाओं के द्वारा शत्रुओं को रोकने वाला, सूर्य के समान प्रतापी, राजाओं का अधिराज, जयसिंह महाराज, तीनों लोकों को अपने यश से शुभ्र बनाता हुआ, सब से उत्कृष्ट है ॥४५॥

संयुताऽयुतोभयावृत्तिमूलं वर्णयमकमुदाहरति—

मामाकारयते रामा सा सा मुदितमानसा।
या या मदारुणच्छाया नानाहेलामयानना ॥४६॥

अन्वयः—या या रामा मदारुणच्छाया नानाहेलामयानना, सा सा मुदितमानसा माम् आकारयते।

पदार्थ —या या–या कापि, रामा–कान्ता, मदारुणच्छाया-मदेन मद्यसेवनेन अरुणा रक्तवर्णा छाया आभा यस्यास्तथाभूता, नानाहेलामयानना–नानाहेलामयं विविधलीलाविलासपरिपूर्णम् आनन वदन यस्यास्तथोक्ता, सा सा–सा एव कान्ता, मुदितमानसा–मुदितम् अतितरां प्रसन्न मानस चेतो यस्या सा, एवभूता प्रसन्नचित्ता सती, माम्, आकारयते–आह्वयति। अत्र 'मा–सा–या–ना' इत्येतेषां वर्णानां प्रतिपादादावावृत्ते वर्णान्तराव्यवधानात्, तस्यैव पदस्यान्ते चावृत्ते वर्णान्तरव्यवधानात् पादानामाद्यन्तगोचर संयुताऽयुतोभयावृत्तिमूलं वर्णयमकमिदम्।

भावार्थ—जो जो कान्ता, मद्य सेवन के कारण रक्त आभा वाली तथा अनेक प्रकार की नवावृत और आकर्षक हाव भावों से युक्त मुख वाली होती है, वही २ कान्ता, प्रसन्न हुई मुझे बुलाती है ॥४६॥

**शब्दालङ्कारान् निरूप्य क्रमप्राप्तान् अर्थालङ्कारान् वक्तुकामः प्रथमं जातिलक्षणमाह—**

**स्वभावोक्तिः पदार्थस्य सक्रियस्याक्रियस्य वा ।**
**जातिर्विशेषतो रम्या हीनत्रस्तार्भकादिषु ॥४७॥**

**अन्वयः—सक्रियस्य अक्रियस्य वा पदार्थस्य स्वभावोक्तिः जातिः, हीनत्रस्तार्भकादिषु विशेषतो रम्या ।**

पदार्थ—सक्रियस्य–क्रियाश्चेष्टाप्रभृतय तत्सहितस्य सचेष्टस्य चेतनस्य इति यावत्, अक्रियस्य–क्रियारहितस्य अचेतनस्य वेत्यर्थ । पदार्थस्य–वस्तुन स्वभावोक्ति–स्वस्य भाव स्थिती रूप वा तदुक्तिस्तद्वर्णनम्, स्वरूपप्रतिपादनमित्यर्थ । जाति–तदाख्योऽलङ्कार उच्यते । एवभूता जाति, हीनत्रस्तार्भकादिषु–हीनेषु अधमेषु भिक्षचाण्डालादिषु, त्रस्तेषु–भयाकुलेषु पीडितेषु वा, अर्भकादिषु बालकादिषु च, विशेषत–असाधारण्येन, रम्या–मनोहरा, भवतीति शेष । एषा स्वभावोक्तिरपि कथ्यते ।

भावार्थ—चेतन अथवा अचेतन वस्तु के स्वरूप का वर्णन करना 'जाति' नामक अलङ्कार कहा जाता है । यह 'जाति' अलङ्कार नीच भील चाण्डाल आदि, डरे हुए अथवा पीडित और बालक आदि के वर्णन करने में विशेष रूप से मनोहर समझा जाता है [ इस अलङ्कार को 'स्वभावोक्ति' भी कहते हैं ] ॥४७॥

**जातिमुदाहरति—**

**वहीवलीवद्दलकाञ्चिरुचो विचित्र-**
**भूर्जत्वचा रचितचारुदुकूललीलाः ।**
**गुञ्जाफलग्रथितहारलताः सहेलं**
**खेलन्ति खेलगतयोऽत्र वने शबर्य्यः ॥४८॥**

अन्वय—अत्र वने वहीवलीवद्दलकाञ्चिरुच. विचित्रभू-

र्जत्वचा रचितचारुदुकूललीलाः गुञ्जाफलग्रथितहारलताः शबर्यः खेलगतयः सहेलं खेलन्ति।

पदार्थ—अत्र-अस्मिन् पुरतो दृश्यमाने, वने–कानने, बर्हावलीबहलकाञ्चिरुच–बर्हाणां मयूरपिच्छानां आवली पंक्तिरेव बहला विशाला काञ्चिः मेखला, 'बहुलकान्ति' इति पाठे बर्हावलीना बहुला प्रभूता या कान्ति शोभा, तया रोचन्ते राजन्त इति तथा, विचित्रभूर्जत्वचा–विचित्रया विविधरेखायुक्तया भूर्जत्वचा–भूर्जाख्यतरुवल्कलेन, रचितचारुदुकूललीला–रचिता विनिर्मिता चारुदुकूलस्य सुन्दरकौशेयवस्त्रस्य लीला क्रीडा अनुकरणं याभिस्ता, धारितभूर्जवल्कला इत्यर्थः। गुञ्जाफलग्रथितहारलताः–गुञ्जाफलैः कृष्णलाफलैः ग्रथिता गुम्फिता हारलता मौक्तिकमाला याभिस्ता, शबर्य–भिल्लाङ्गनाः, खेलगतयः–सविलासगमनशीलाः सत्य, सहेलं–सविलासम्, सवेगं वा यथा स्यात् तथा खेलन्ति–क्रीडन्ति। अत्र शबरीणां हीनजातीनां स्वाभाव्यवर्णनाद् हीनजातिगतचेष्टावर्णनपरा जातिरलङ्कार।

भावार्थ—इस वन में, मोरपंखों की बनी हुई विशाल मेखला [ करधनी, तगडी ] से सुशोभित, विचित्र भोजपत्रों से रेशमी वस्त्रों का अनुकरण करती हुई, चिरमिठियों [ रत्तियों ] से ही मोती की माला गूंथे हुए, भिल्लनियां, बड़ी मस्तानी के साथ वेग पूर्वक खेल रही हैं॥४८॥

प्राकृतकाव्ये जातिमुदाहरति—

आरत्तणेत्तधोरणिमीसणवअणुक्करो कुरंगच्छि!।
उल्लसिअवीसभुअवणविणिवेसो दसमुहो एसो॥४६॥

अस्य संस्कृतम्—

आरक्तनेत्र[नयन]श्रेणिभीषणवदनोत्करः कुरङ्गाक्षि!।
उल्लसितविंशतिभुजवनविनिवेशो दशमुख एषः॥

अन्वयः—कुरङ्गाक्षि! एषः आरक्तनेत्रश्रेणिभीषणवदनोत्करः उल्लसितविंशतिभुजवनविनिवेशः दशमुखः।

पदार्थ—कुरङ्गाक्षि!–कुरङ्गस्य मृगस्य अक्षिणीव अक्षिणी नयने यस्याः सा, तत्सम्बुद्धौ तथा, हे मृगनेने! एष–अयं पुरतो दृश्यमान, आरक्तनेत्रश्रेणिभीषणवदनोत्कर–आ समन्तात् रक्ता अरुणा या नेत्राणां नयनानां

श्रेणि पङ्क्ति, तया भीषणो भयजनको वदनोत्करो मुखसमूहो यस्य तथाभूत, उल्लसितविंशतिभुजवनविनिवेश –उल्लसित प्रफुल्लितम् अतिशयप्रसाद परिपूर्णं विंशतिभुजाना विंशतिसंख्याकबाहूना यद् वन कानन तस्य विनिवेश समावेशो यत्र तथाभूत, शक्तिशालिविंशतिभुजाश्रयभूत इत्यर्थ । दशमुख–दशसंख्याकानि मुखानि आननानि यस्य तादृशो रावण, वर्तत इति शेष । अत्र रावणस्य नैसर्गिकधर्माणस्वरूपवर्णनात् स्वभावोक्तिर्नामालङ्कार ।

भावार्थ—हे मृगनयनी ! यह सामने दीखता हुआ लाल २ आखों की पङ्क्ति से डरावने मुखों वाला और प्रफुल्लित बीस भुजाओं का आश्रय, रावण है ॥४६॥

क्रमप्राप्तामुपमा लक्षयति—

उपमानेन सादृश्यमुपमेयस्य यत्र सा ।
प्रत्ययाव्ययतुल्यार्थसमासैरुपमा मता ॥५०॥

अन्वयः—यत्र प्रत्ययाव्ययतुल्यार्थसमासै उपमेयस्य उपमानेन सादृश्यं सा उपमा मता ।

पदार्थ—यत्र–यस्या रचनायाम्, प्रत्ययाव्ययतुल्यार्थसमासै –प्रत्ययै वतिप्रभृतिभि, अव्ययै इवादिभि तुल्यार्थै समसदृशतुल्यप्रभृतिभि पदै, समासै कर्मधारयादिभि, उपमेयस्य–प्रकृतवस्तुन उपमानेन–दृष्टान्तेन पद्मादिना सह सादृश्य–समानताप्रतिपादन क्रियते, सा–एवलक्षणा, उपमा–तदाख्योऽलङ्कार, मता–स्वीकृता, अलङ्कारविद्भिरिति शेष ।

भावार्थ—जिस रचना में, प्रत्यय 'वति' आदि, अव्यय 'इव' आदि, समानार्थक पद 'तुल्य' 'सादृश्य' आदि तथा समास 'कर्मधारय' आदि के द्वारा उपमेय की उपमान के साथ समानता बताई जावे, उसको 'उपमा' कहते हैं ॥५०॥

उपमामुदाहरति—

गत्या विभ्रममन्दया प्रतिपदं या राजहंसायते
यस्याः पूर्णमृगाङ्कमण्डलमिव श्रीमत् सदैवाननम् ।
यस्याश्चानुकरोति नेत्रयुगलं नीलोत्पलानि श्रिया
तां कुन्दाग्रदतीं त्यजन् जिनपती राजीमतीं पातु वः ॥५१॥

**अन्वयः—या विभ्रममन्दया गत्या प्रतिपदं राजहंसायते, यस्याः आननं सदैव पूर्णमृगाङ्कमण्डलमिव श्रीमत्, यस्याः नेत्रयुगलं च श्रिया नीलोत्पलानि अनुकरोति, तां कुन्दाग्रदतीं राजीमतीं त्यजन् जिनपतिः वः पातु।**

पदार्थः—या–वरवर्णमाला राजीमती, विभ्रममन्दया–विलासमन्थरया, गत्या–गमनेन, प्रतिपदं–प्रतिचरणन्यासम्, राजहंसायते–राजहंसीवाचरति, 'कर्तुः क्यङ् सलोपश्च' इत्याचारार्थकेन क्यङ्प्रत्ययेन उपमानोपमेययोः साम्यप्रतिपादनम्, यस्याः–राजीमत्याः, आननं–वदनम्, सदैव–सर्वस्मिन्नेव काले, पूर्णमृगाङ्कमण्डलमिव–सकलशशिबिम्बवत्, अत्र 'इव' इत्यव्ययेन साम्यप्रतिपादनम्, श्रीमत्–शोभायुक्तं कान्तिमदित्यर्थः। यस्याः–राजीमत्याः, नेत्रयुगलं–अक्षिद्वयं च, श्रिया–शोभया, नीलोत्पलानि–इन्दीवराणि, अनुकरोति–अनुवदति, अत्र 'अनुकरोति' इति क्रियापदेन साम्यमुच्यते। ताम्–उक्तलक्षणाम्, कुन्दाग्रदतीं–माघ्यपुष्पाग्रभागवत् मनोहराः स्वच्छाः सिता वा दन्ता रदना यस्याः, तथाभूताम्, अत्र समासेन उपमानोपमेययोः साम्यमुच्यते, राजीमतीं–तदभिधाना कान्ताम्, त्यजन्–परिजहत्, जिनपतिः–भगवान् बुद्धः, वः–युष्मान्, पातु–रक्षतु।

भावार्थ—जो राजीमती अपनी सुन्दर मन्द गति से हर एक कदम पर राजहंसी के समान मालूम देती है, जिसका मुख सदा ही पूर्णचन्द्रबिम्ब के समान कान्तियुक्त रहता है और जिसकी दोनों आंखें, अपनी शोभा से नीले कमल का अनुकरण करती हैं, उस माघ्य फूल की कली के समान दांतोंवाली राजीमती नामक रानी को छोड़ता हुआ बुद्ध भगवान् आपकी रक्षा करें॥५१॥

**उपमाया उदाहरणान्तरं दर्शयति—**

**चन्द्रवद्वदनं तस्याः नेत्रे नीलोत्पले इव।**
**पक्वबिम्बं हसत्योष्ठः पुष्पधन्वधनुर्भ्रुवौ॥५२॥**

**अन्वयः—तस्याः वदनं चन्द्रवत्, नेत्रे नीलोत्पले इव, ओष्ठः पक्वबिम्बं हसति, भ्रुवौ पुष्पधन्वधनुः॥**

पदार्थः—तस्याः–प्रसिद्धायाः राजीमतीमहिष्याः, वदनम्–आननम्, चन्द्रवत्–चन्द्रेण शशिना तुल्यम्, अतिसुन्दरं कान्तियुक्तमित्यर्थः, नेत्रे–

अक्षिणी, नीलोत्पले–इन्दीवरे, तत्सदृशी वर्तेते इत्यर्थः, ओष्ठ–अधर, पक्वबिम्ब–परिणतम् अरुणाच्छाय बिम्बफलं हसति–तिरस्करोति अनुकरोति वा, धातूनामनेकार्थत्वात् हसतेरनुकरणार्थता एवोपमायां सङ्गच्छते । भ्रुवौ–नेत्रयोरुपरि स्थिते रोमराजी, पुष्पधन्वधनु –पुष्पधन्वन मदनस्य धनु बाणम्, हसत इति वचनव्यत्ययेनान्वय । अत्र वदननेत्रोष्ठभ्रुवाम् उपमेयाना चन्द्रनालोत्पलबिम्बमदनधनुर्भिरुपमानै सह सादृश्य क्रमश 'वत्' प्रत्ययेन, 'इव' इत्यव्ययेन, 'हसति' इति अनुकरणार्थकेन क्रियापदेन बोध्यते, तस्मादिह उपमालङ्कार ।

भावार्थ—उस प्रसिद्ध राजीमती का मुख चन्द्र के समान, तथा नेत्र नील कमल के समान हैं । उसके होठ ( ओठ ) पक हुए लाल बिम्बफल का अनुकरण करते हैं और भौंहें कामदेव के धनुष के समान हैं ॥५२॥

अधुना प्राकृतकाव्ये उपमामुदाहरति—

मअभरिअमाणसस्स वि णिच्चं दोसा अरस्स ससिणो व्व ।
तुह विरहे तीअ मुहं संउइअं सुहअ ! कुमुअं व्व ॥५३॥

अस्य संस्कृतम्—

मदभरितमानसस्यापि नित्यं दोषाकरस्य शशिन इव ।
तव विरहे तस्या मुखं संकुचितं सुभग ! कुमुदमिव ॥

अन्वय —सुभग ! नित्य मदभरितमानसस्य दोषाकरस्य अपि शशिन इव तव विरहे तस्या मुखं कुमुदमिव संकुचितम् ।

पदार्थ —सुभग ! –हे सौभाग्यशालिन् ! नित्य–निरन्तरम्, मदभरितमानसस्य–मदेन दर्पेण भरितं परिपूर्णं मानसं चेतो यस्य तथाभूतस्य, तव इत्यनेन सम्बन्धे अन्यस्मिन् पक्षे मदः कस्तूरिका सोऽस्यास्तीति मद कस्तूरीमृग, अर्शआदित्वान्मत्वर्थीयोऽच्, तेन भरित परितो व्याप्त मानस हृदय लक्षणया मध्यप्रदेशो यस्य तादृशस्य, दोषाकरस्य–दोषाणां छिद्राणामाकरस्य खने, अपराधपरिपूर्णस्येत्यर्थ, अन्यत्र दोषाकरस्य–निशाकरस्य, अपि शशिन –चन्द्रमस इव, तव–भवत, विरहे–वियोगे, तस्या –कान्ताया मुखम्–आननम्, कुमुदमिव–निशाविकासिपद्मविशेषवत्, संकुचित–मुद्रित म्लानं जातम् । अत्र चन्द्रसुभगयो कुमुदवदनयोश्चोपमानोपमेययो इवशब्देन सादृश्यस्याभिधानात् स्फुट एवोपमालङ्कार ।

भावार्थ—ओ किस्मत वाले ! मृग से लाञ्छित तथा रात्रि को उत्पन्न करने वाले चन्द्रमा के वियोग में जैसे कुमुद मुरझा जाता है, ठीक उसी तरह हर्ष से परिपूर्ण हृदय वाले, दोषी तुम्हारे वियोग में उस कामिनी का मुख मुरझा जाता है ॥५३॥

उपमेयोपमामुदाहरति—

तं णमह वीअराअं जिणं दमुद्दलिअदिढअरकसाअम् ।
जस्स मणं व्व सरीरं मणं सरीरं व्व सुपसण्णम् ॥५४॥

अस्य संस्कृतम्—

तं नमत वीतरागं जिनं दमोद्दलितदृढतरकषायम् ।
यस्य मन इव शरीरं मनः शरीरमिव सुप्रसन्नम् ॥

अन्वयः—वीतरागं दमोद्दलितदृढतरकषायं तं जिनं नमत, यस्य शरीरं मन इव, मनः शरीरमिव सुप्रसन्नम् ।

पदार्थ—वीतराग-परित्यक्तसकलविषयवासनम्, दमोद्दलितदृढतरकषायं-दमेन इन्द्रियनिग्रहेण उद्दलिताः समूलमुन्मूलिता दृढतरा अनादिकालसंचितत्वात् स्थिराः कषायाः कामक्रोधादयो दोषा येन तथाविधम्, तं-लोकप्रसिद्धम्, जिनं-बुद्धदेवम्, नमत-प्रह्वीभवत सेवध्वमित्यर्थः । यस्य-भगवतो बुद्धदेवस्य, शरीरं-कायम्, मन इव-चित्तमिव, मनः-चेतश्च, शरीरमिव-देहवत्, सुप्रसन्नम्-अतिशयप्रसादगुणयुक्तम्, सदा प्रफुल्लितम्, वर्तत इतिशेषः । अत्र मनः शरीरञ्च क्रमेण उपमानमुपमेयञ्चापि, परस्परमुपमानोपमेयत्वादनयोरत्र उपमेयोपमालंकारः, अस्या एव 'अन्योन्योपमा' इत्यपि नाम ।

भावार्थ—सांसारिक विषय वासनाओं से रहित, इन्द्रिय निग्रह द्वारा काम क्रोध आदि बलवान् दोषों को नष्ट करने वाले, भगवान् बुद्ध को प्रणाम करो, जिसका शरीर मन की तरह और मन शरीर की तरह सदा प्रसन्न रहते हैं॥५४॥

अनन्वयोपमामुदाहरति—

ये देव ! भवतः पादौ भवत्पादाविवाश्रिताः ।
ते लभन्तेऽद्भुतां भव्यां श्रियं त इव शाश्वतीम् ॥५५॥

अन्वयः—देव ! ये भवत्पादौ इव भवतः पादौ आश्रिता ते इव ते, अद्भुतां भव्यां शाश्वतीं श्रियं लभन्ते ।

पदार्थ—देव !—हे भगवन् ! ये—उपासका जना, भवत्पादौ इव—भवतस्तव पादौ चरणौ इव, भवत—श्रीमतस्तव, पादौ—चरणौ, आश्रिता प्राप्ता, ते इव ते—अनन्यसदृशास्ते लोकोत्तरा उपासका जना इत्यर्थः अद्भुता—तामपि आश्चर्यजनिकाम्, भव्या—कल्याणकारिणीम्, शाश्वतीं सार्वकालिकीम्, अविनाशिनीमिति यावत्, श्रियं—दिव्या सम्पदम लभन्ते—प्राप्नुवन्ति । अत्र 'रामरावणयोर्युद्धं रामरावणयोरिव' इत्यादिव भवत्पादावेव भवत्पादयो, त एव च तेषामुपमानम्, एवमुपमानोपमेययो रैक्याद अनन्वयोपमालङ्कार. ।

भावार्थ—हे देव ! जो उपासक जन, आपके अनन्यसदृश चरणों क आश्रय लेते हैं, वे अद्वितीय भक्त जन, आश्चर्यजनक, कल्याणकारी [illegible] कभी नाश न होने वाली दिव्य सम्पत्ति को प्राप्त करते हैं ॥५५॥

अनेकोपमेयमूलामुपमामुदाहरति—

आलोकनञ्च वचनञ्च निगूहनञ्च
यासां स्मरन्नमृतवत् सरसं कृशस्त्वम् ।
तासां किमङ्ग ! पिशितास्थिपुरीषपात्रं
गात्रं विचिन्त्य सुदृशां न निराकुलोऽसि ॥५६॥

अन्वयः—यासाम् आलोकनञ्च वचनञ्च निगूहनञ्च अमृतवत् सरसं स्मरन् त्वं कृशः, अङ्ग ! सुदृशां तासां गात्रं पिशितास्थिपुरीषपात्रं विचिन्त्य निराकुलः न असि किम् ? ।

पदार्थ—कस्यचिद्विरक्तस्यानुरक्तं मित्रं प्रति वचनमिदम्—अयि मित्र ! यासां—नारीणाम्, आलोकनं—दर्शनम्, वचनञ्च—भाषणञ्च, निगूहनञ्च—आलिङ्गनञ्च, अमृतवत्—अमृतेन तुल्यम्, पीयूषसममित्यर्थः । सरसं—रसेन आस्वादानुकूल्येन सह वर्तत इति तथा, सुखदं शान्तिकारकं चेत्यर्थः । स्मरन्—पुनः चिन्तयन्, त्वं कृशः—दौर्बल्यं दुर्बल. संजातोऽसि इति शेष । अङ्ग !—प्रिय !, सुदृशां—मनोहरनेत्राणाम्, तासां—तथाभूतानां नारीणाम्, गात्रं—शरीरम्, पिशितास्थिपुरीषपात्रं—विशीर्णं मांसम्, अस्थि कङ्कालम्, 'अस्थि' इति

पाठे असृं शोणितं पुरीषं विष्ठा मलं च तेषां पात्रम् आश्रयभूतम्, विचिन्त्य-सम्यगवबुध्य, निराकुल-अनुद्विग्नः,न असि-न संजातोऽसि किम् ? अत्र काक्वा अहं-त्वम् उद्विग्नः संजात एव भवेरिति भावः। अत्र श्लोकनवचन-निगूहनानां बहूनामुपमेयानाम् एकेनैवामृतेनोपमानेन सादृश्यमित्यनेकोपमेय-निबन्धनेयमुपमा इति।

भावार्थ—अरे मित्र! जिन स्त्रियों के दर्शन, भाषण और आलिङ्गन को अमृत के सामने शान्तिदायक समझ उनको याद करता हुआ तू दुर्बल होता जा रहा है, प्रिय! मनोहर नेत्रों वाली उन स्त्रियों के शरीर को मांस, हड्डी और विष्ठा का आधार समझ कर क्या तू अभी घबड़ाया नहीं ? ॥५६॥

अनेकोपमानमूलामुपमामुदाहरति—

कलेव चन्द्रस्य कलङ्कमुक्ता
मुक्तावलीवोरुगुणप्रपन्ना।
जगत्त्रयस्याभिमतं ददाना
जैनेश्वरी कल्पलतेव मूर्त्तिः ॥५७॥

अन्वयः—चन्द्रस्य कला इव कलङ्कमुक्ता, मुक्तावली इव उरुगुणप्रपन्ना, कल्पलता इव जगत्त्रयस्य अभिमतं ददाना जैनेश्वरी मूर्त्तिः [विजयते]।

पदार्थः—चन्द्रस्य-निशाकरस्य, कला इव-भाग इव, कलङ्कमुक्ता-मृग-लाञ्छनरहिता, मूर्त्तिपक्षे निर्दोषा इत्यर्थः। मुक्तावली इव-मौक्तिकहारलतावत्, उरुगुणप्रपन्ना-उरुणा महता गुणेन सूत्रेण प्रपन्ना युक्ता ग्रथिता, अन्यत्र महद्भिरौदार्यगाम्भीर्यादिभिर्गुणैः प्रपन्ना युक्ता इत्यर्थः। कल्पलता इव-अभिमतफलप्रदायिनी कल्पवल्ली इव, जगत्त्रयस्य-त्रिभुवनस्य, अभिमतम्-अभिलषितं वाञ्छितं फलम्, ददाना-वितरन्ती, जैनेश्वरी-जिनो बुद्धदेव एव ईश्वरः, तत्सम्बन्धिनी, मूर्त्तिः-प्रतिकृतिः, विजयते इति शेषः। अत्र मूर्त्ति-रिति एकस्यैवोपमेयस्य चन्द्रकला-मुक्तावली-कल्पलताख्यानि त्रीणि उप-मानानि, एवमनेकोपमाननिबन्धना इयमुपमा इति।

के समान तीनों लोकों के वाञ्छित फल को देने वाली जिनेश्वर की मूर्ति सबसे उत्कृष्ट है ॥५७॥

इदानीमुपमादोषान् प्रदर्शयति—

विभिन्नलिङ्गवचनां नातिहीनाधिकाञ्च ताम् ।
निबध्नन्ति बुधाः क्वापि लिङ्गभेदं तु मेनिरे ॥५८॥

अन्वय—बुधाः विभिन्नलिङ्गवचनाम् अतिहीनाधिकाञ्च तां न निबध्नन्ति, क्वापि तु लिङ्गभेदं मेनिरे ।

पदार्थ—बुधाः-विद्वांसः कवयः, विभिन्नलिङ्गवचनां-विभिन्नं पृथग्भूतं लिङ्गं स्त्रीपुंनपुंसकरूपं वचनं च एकत्वादि यस्याः तथाभूताम्, अतिहीनाधिकाम्-अतिहीनाम् अतिनिकृष्टाम्, अत्यधिकाम् अत्युत्कृष्टाम्, ताम्-उपमाम्, न निबध्नन्ति-काव्ये न निरूपयन्तीत्यर्थः । क्वापि-क्वचित्तु, लिङ्गभेदं-लिङ्गवैलक्षण्यम्, मेनिरे-अङ्गीकुर्वन्ति स्म, लिङ्गभेदं क्वचिद्दोषं न मन्यन्ते इत्यर्थः ।

भावार्थ—चतुर कवि, उपमान और उपमेय में भिन्न लिङ्ग और भिन्न वचन का, तथा अति हीनता और अति अधिकता का प्रयोग नहीं करते । कहीं २ लिङ्गभेद का दोष नहीं भी माना गया है ॥५८॥

उपमानोपमेययोर्लिङ्गादिभेदमुदाहरति—

हिममिव कीर्त्तिर्धवला चन्द्रकलेवातिनिर्मला वाचः ।
ध्वाङ्क्षस्येव च दास्यं नभ इव वक्षश्च ते विपुलम् ॥५९॥

अन्वय—ते कीर्त्तिः हिममिव धवला, वाचः चन्द्रकला इव अतिनिर्मलाः, दास्यं च ध्वाङ्क्षस्य इव, वक्षश्च नभ इव विपुलम् ।

च, ध्वाङ्क्षस्य–काकस्य इव, काकवद् भवानतिचतुरो वर्तत इति भावः। अत्रोपमानं 'ध्वाङ्क्षः' उपमेयराजापेक्षया अतिहीनम्, अत एव हीनोपमत्वमत्र दोषः। वक्षश्च–उरःस्थलं च, नभ इव–आकाशवत्, विपुलम्–अतिविशालमित्यर्थः। अत्रोपमानस्य नभसः उपमेयवक्षोऽपेक्षया अत्याधिक्याद् अधिकोपमत्वं दोषः। सर्वेष्वप्येतेषु लिङ्गादिभेदेषु उपमानोपमेययोः साधर्म्यव्याघातकत्वं दूषकताबीजम्।

भावार्थ—हे राजन्! तुम्हारा यश बरफ के समान सफेद, तुम्हारा भाग्य चन्द्रमा की कला के समान अत्यन्त निर्मल, तुम्हारी चतुरता कौए के समान और तुम्हारी छाती आकाश के समान अत्यन्त विशाल है ॥५९॥

अतिहीनाधिकयोः प्रकारान्तरेणोदाहरणमाह—

शुनीयं गृहदेवीव प्रत्यक्षा प्रतिभासते।
खद्योत इव सर्वत्र प्रतापश्च विराजते ॥६०॥

अन्वयः—इयं शुनी प्रत्यक्षा गृहदेवी इव प्रतिभासते, प्रतापश्च खद्योत इव सर्वत्र विराजते।

पदार्थ—इयं–पुरो दृश्यमाना, शुनी–कुक्कुरी, प्रत्यक्षा–लोचनगोचरीभूता, साक्षात्, गृहदेवी इव–आवासदेवता इव, प्रतिभासते–शोभते। अत्रोपमेयशुन्यपेक्षया उपमानस्य 'गृहदेवी' इत्येतस्य आत्मा अत्यधिकत्वाद् अधिकोपमत्वं दोषः, प्रतापश्च–कोशादिजन्यं तेजश्च, खद्योत इव ज्योतिरिङ्गणवत्, सर्वत्र–सर्वेषु स्थानेषु, विराजते–द्योतते। अत्रोपमेयदिगन्तव्यापिप्रतापापेक्षया उपमानस्य खद्योतस्यातिहीनत्वात् हीनोपमत्वं दोषः।

भावार्थ—यह कुत्ती, साक्षात् गृहदेवता के समान मालूम होती है और प्रताप, जुगनू के समान सब जगह व्याप्त हो रहा है ॥६०॥

उपमानस्य विशेषणकृतं न्यूनाधिकत्वमुदाहरति—

सफेनपिण्डः प्रौढोर्मिरब्धिः शार्ङ्गीव शङ्खभृत्।
श्च्योतन्मदः करी वर्षन् विद्युत्वानिव वारिदः ॥६१॥

अन्वयः—सफेनपिण्डः प्रौढोर्मिः अब्धिः शङ्खभृत् शार्ङ्गी इव, श्च्योतन्मदः करी वर्षन् विद्युत्वान् वारिद इव।

पदार्थ —सफेनपिण्ड –फेनपिण्डै बुद्बुदराशिभि सहित इति तथा, फेनपुञ्जधवलित इत्यर्थ । प्रौढोर्मि –प्रौढा अत्युन्नता ऊर्मयो वीचयो यस्य तथाभूत , अब्धि –समुद्र , शङ्खभृत्–शङ्खान् बिभर्त्ति धारयतीति तथा, शखयुक्त , शखानामुत्पत्तिस्थानमिति भाव । विष्णुपक्षे–शख पाञ्चजन्य बिभर्ति पाणिना धारयतीति तथा, पाञ्चजन्यपाणिरित्यर्थ । शार्ङ्गी इव–विष्णुरिव वर्त्तते शोभते वेति शेष । अत्रोपमानस्य शार्ङ्गिण एकमेव विशेषणम्, उपमेयस्याब्धेस्तु द्वे । एवमुपमानस्य हीनविशेषणत्वात् विशेषणकृत हीनोपमत्व दोष । श्च्योतन्मद –श्च्योतन्त स्रवन्त मदा दानवारीणि यस्य यस्माद्वेति तथा, मदजलस्रावीत्यर्थ । करी–गज , वर्षन्–वृष्टिं कुर्वन्, विद्युत्वान्–तडित्वान्, वारिद इव–जलद इव, शोभते इति शेष । अत्रोपमानस्य मेघस्य विशेषणद्वयम्, उपमेयस्य करिणस्तु एकमेव विशेषणम्, एवमुपमानस्याधिकविशेषणत्वाद् विशेषणकृतम् अधिकोपमत्व दोष' ।

भावार्थ—झागों से युक्त, तथा ऊंची २ लहरों वाला समुद्र, पाञ्चजन्य शख को धारण करने वाले विष्णु के समान, शखों का उत्पत्ति स्थान है । और मद बरसाता हुआ हाथी, बरसते हुए तथा बिजली चमकाते हुए बादलों के समान सुशोभित हो रहा है ॥६१॥

**कदाचिदुपमायां लिङ्गभेदस्यादोषत्वमपीत्युक्तम् । सम्प्रति तदेवोदाहरति—**

**मुखं चन्द्रमिवालोक्य देवाह्लादकरं तव ।**
**कुमुदन्ति मुदाक्षीणि क्षीणमिथ्यात्वसम्पदाम् ॥६२॥**

**अन्वयः—देव ! चन्द्रमिव आह्लादकरं तव मुखम् आलोक्य क्षीणमिथ्यात्वसम्पदाम् अक्षीणि मुदा कुमुदन्ति ।**

पदार्थ —देव !–हे प्रभो ! चन्द्रमिव–शशिनमिव, आह्लादकरम्–उल्लासोत्पादकम्, तव–भवत , मुखम्–आननम्, आलोक्य–निरीक्ष्य, क्षीणमिथ्यात्वसम्पदां–क्षीणा विनष्टा, मिथ्यात्वस्य अलीकभावस्य असत्यतायाः, सम्पत् ज्ञानमुत्कर्षो वा येषां तथाभूतानां तत्त्वज्ञानिनां पुरुषाणाम्, अक्षीणि–चक्षूंषि, मुदा–हर्षेण, कुमुदन्ति–कुमुदानीवाचरन्ति, विकसन्तीत्यर्थ । अत्रोपमेयस्य मुखस्य उपमानस्य च चन्द्रस्य लिङ्गभेदेऽपि, तदुभयविशेषणे-

भूतस्य आह्लादकरमित्यस्य द्वितीयैकवचने समानरूपत्वेन लिङ्गभेदप्रत्ययस्याभावात् उपमा निर्दोषैवेति स्पष्टम् ।

भावार्थ—हे देव ! चन्द्रमा के समान हर्ष देने वाले तुम्हारे मुख को देखकर, नष्ट हुए मिथ्या ज्ञान वाले पुरुषों की आंखें प्रसन्नता से कुमुदों की तरह खिल जाती हैं ॥६२॥

समासे लिङ्गभेदस्यादोषत्वमुदाहरति—

निजजीवितेशकरजाग्रकृतक्षतपङ्क्तयः शुशुभिरे सुरते ।
कुपितस्मरप्रहितबाणगणव्रणजर्जरा इव सरोजदृशः ॥६३॥

अन्वयः—सरोजदृशः सुरते निजजीवितेशकरजाग्रकृतक्षतपंक्तयः कुपितस्मरप्रहितबाणगणव्रणजर्जरा इव शुशुभिरे ।

पदार्थः—सरोजदृशः-सरोजे कमले इव मनोहरे, दृशौ नेत्रे यस्यास्तथाभूतायाः कमलनेत्रायाः कान्तायाः इत्यर्थः । सुरते-पतिसङ्गमे, निजजीवितेशकरजाग्रकृतक्षतपंक्तयः-निजः स्वीयो यो जीवितेशः प्राणनाथः, तस्य स्वभर्तुः करजाग्रैः नखप्रान्तभागैः कृतानां समुत्पादितानां, क्षतानां व्रणानां पंक्तयः श्रेणयः, कुपितस्मरप्रहितबाणगणव्रणजर्जरा इव—कुपितः क्रुद्धो यः स्मरो, मदनः, तेन प्रहिताः प्रक्षिप्ताः प्रेषिता ये बाणगणाः शरसंघाः तैः, व्रणानां, क्षतानां जर्जरा इव चिह्नानि इव, शुशुभिरे—रराजिरे । अत्र 'सरोजदृशः' इति समासपदे सरोजस्योपमानस्य क्लीवत्वम्, 'दृश' इत्यस्य चोपमेयस्य स्त्रीत्वम्, इति समासगते लिङ्गभेदे, एवमुत्प्रेक्षामूलायामुपमायां 'क्षतपंक्तयः' इत्येतस्योपमेयस्य स्त्रीलिङ्गत्वेन 'व्रणजर्जरा' इत्युपमानस्य च पुंल्लिङ्गत्वेन उपमानोपमेययोर्लिङ्गभेदे सत्यपि समानरूपत्वेनोभयोः, लिङ्गभेदप्रत्ययकाभावादियमुपमा निर्दोषैवेति बोध्यम् ।

भावार्थ—कमल के समान नेत्रवाली कान्ता के सम्भोग समय में, अपने पति के नखों से उत्पन्न हुई क्षत पंक्तियां, क्रुद्ध कामदेव के द्वारा फेंके हुए बाणों से लगे घावों के चिह्नों की तरह शोभित हो रही हैं ॥६३॥

रूपकेऽपि लिङ्गभेदमुदाहरति—

हस्ताग्रविन्यस्तकपोलदेशा मिथो मिलत्कङ्कणकुण्डलश्रीः ।
सिषेच नेत्रस्रवदश्रुधारैर्दोःकन्दलीं काचिदधरपनाथा ॥६४॥

अन्वयः—अवश्यनाथा काचित् हस्ताग्रविन्यस्तकपोलदेशा मिथः मिलत्कङ्कणकुण्डलश्रीः नेत्रस्रवदश्रुधारैः दोःकन्दलीं सिषेच।

पदार्थ—अवश्यनाथा—न वश्य वशगत आयत्तीभूतो नाथो भर्ता यस्या सा, अनधीनभर्तृका इत्यर्थ, काचित्—कापि नारी, हस्ताग्रविन्यस्तकपोलदेशा—हस्तस्य करस्य अग्रे पुरोभागे विन्यस्तोऽर्पित कपोलदेशो गण्डस्थल यया तथाभूता, अत एव मिथ—परस्परम्, मिलत्कंकणकुण्डलश्री—करकर्णयो रतिसामीप्यात् मिलन्ती सगच्छमाना कंकणस्य करालङ्कारस्य कुण्डलस्य कर्णभूषणस्य च श्री शोभा यस्यास्तथाभूता सती नेत्रस्रवदश्रुधारै—नेत्राभ्यां चक्षुर्भ्यां स्रवद्भि क्षरद्भि अश्रूणा नेत्रजलाना धारै धाराभि प्रवाहैरित्यर्थ। दो कन्दलीं—भुजलताम्, सिषेच—अभिषिक्तवती। अत्र 'दो कन्दलीम्' इति रूपके उपमेय 'दो' इति पद पुंल्लिङ्गम्, उपमान च 'कन्दली' इति पद स्त्रीलिङ्गम्, इति सत्यपि लिङ्गभेदे उभयोरभेदाध्यवसायेन साम्यबोधान्न दोष कश्चित्।

भावार्थ—अपने पति को वश में न रख सकने वाली किसी रमणी ने हथेली पर कपोल को टकाकर, कान और पहुँचे के आभूषण कुण्डल तथा कङ्कण की शोभा को मिलाते हुए, नेत्रों से बहती हुई अश्रुधाराओं के द्वारा, अपनी भुजलता को सींच डाला ॥६४॥

भिन्नलिङ्गां प्रतिवस्तूपमामुदाहरति—

> यदुवीरेऽप्यसावेको यदुवंशेऽद्भुतोऽभवत्।
> किं केतक्यां दलानि स्युः सुरभीण्यखिलान्यपि ॥६५॥

अन्वयः—यदुवीरेऽपि यदुवंशे असौ एकः अद्भुतः अभवत्। केतक्याम् अखिलान्यपि दलानि किं सुरभीणि स्युः?।

पदार्थ—यदुवीरे—यद्वोऽनेके वीरा पराक्रमशालिन शूरा यस्मिन्, एवभूते अपि, यदुवंशे—यादवक्षत्रियकुले, असौ—स कृष्ण, एक केवल, अद्भुत—दिव्यशक्तियुक्तत्वादाश्चर्यभूतो जनानाम्, अभवत्—अजायत। तथा कि केतक्यां—केतकीलतायाम्, अखिलानि—सकलानि अपि, दलानि—पत्राणि किं सुरभीणि—सुगन्धीनि, स्यु—भवेयु? नैव स्युरित्यर्थ। अत्र 'यदुवरा.' इति

उपमेयपदं पुँल्लिङ्गम्, उपमानं 'केतकी' तु स्त्रीलिङ्गम्, एवं 'वीर' इति उपमेयं पुँल्लिङ्गम्, उपमानं 'दलानि' इति तु नपुंसकलिङ्गम्, तथा 'एकः' इत्युपमेयं पुँल्लिङ्गम्, किमपि एकं सुरभितं भवतीति व्यज्यमानं वस्तु पत्ररूपं नपुंसकलिङ्गम्, एवमयमनेकधाऽपि लिङ्गभेदः प्रस्तुतार्थाविघटकतया न कश्चिद्दोषमावहतीति ।

भावार्थ—अनेक वीरों से भरे हुए भी इस यदुवंश में केवल वह कृष्ण ही अद्भुत पुरुष हुआ। केतकी लता में क्या सब ही पत्ते सुगन्धित होते हैं ॥६५॥

उपमां निरूप्य क्रमप्राप्तं रूपकं लक्षयति—

रूपकं यत्र साधर्म्यादर्थयोरभिदा भवेत् ।
समस्तं वाऽसमस्तं वा खण्डं वाऽखण्डमेव वा ॥६६॥

अन्वयः—यत्र साधर्म्यात् अर्थयोः अभिदा भवेत्, [तत्] रूपकम्, समस्तं वा असमस्तं वा खण्डं वा अखण्डम् एव वा।

पदार्थ—यत्र–यस्मिन् अलङ्कारे, साधर्म्यात्–समानधर्मभावात्, अर्थयोः–उपमानोपमेयगतयोः प्रतिपाद्यवस्तुनोः, अभिदा–अभेदः तादात्म्यम्–ऐकात्म्यबुद्धिर्वा, भवेत्–स्यात्, तत् रूपकं–तदाख्योऽलङ्कारो भवतीति शेषः। तद्रूपकं समस्तं–समासयुक्तं वा, असमस्तं–समासरहितं व्यस्तमिति वा, खण्डं–केवल निरङ्गं वा, अखण्डं–पूर्णं साङ्गम् एव वा। तदेवं चतुर्विधं रूपकं भवतीति भावः।

भावार्थ—जिस अलङ्कार में, समान धर्म होने से, प्रतिपाद्य दो अर्थों का ऐकात्म्य प्रतीत होवे, उसे रूपक कहते हैं। उसके चार भेद हैं—समस्त अखण्ड, असमस्त अखण्ड, समस्त खण्ड और असमस्त खण्ड ॥६६॥

तत्रादौ समस्तमखण्डं रूपकमुदाहरति—

कीर्णान्धकारालकराजमाना
निबद्धतारास्थिमणिः कुतोऽपि ।
निशापिशाची व्यचरद्दधाना
महान्त्युलूकध्वनिफेत्कृतानि ॥६७॥

अन्वयः—कीर्णान्धकारालकराजमाना निबद्धतारास्थिमणिः, महान्ति उलूकध्वनिफेत्कृतानि दधाना निशापिशाची कुतः अपि व्यचरत्।

पदार्थ —कीर्णान्धकारालकराजमाना—कीर्णा॰ सर्वासु दिक्षु व्याप्ता ये अन्धकारा तमांसि, एव अलका केशा , ते राजमाना शोभमाना 'राजमाना' इत्यत्र 'शालमाना' इति पाठेऽपि शालते शोभार्थकत्वात् शोभमाना इत्येवार्थ । निबद्धतारास्थिमणि –निबद्धा परितो लम्बमाना सलग्ना वा, व्यक्तीभूता इति यावत्, तारा तारका , एव अस्थिमणय कण्ठधारितास्थिरूपरत्नविशेषा यस्यास्तथाभूता, अथवा निबद्धा मालारूपेण धारिता , तारारूपाणि अस्थीनि एव मणयो मुक्ता वज्रादयो यया, एवभूता, महान्ति–तारतराणि, उच्च तराणीत्यर्थ । उलूकध्वनिफेत्कृतानि—उलूकाना दिवान्धाना ध्वनय शब्दा एव फेत्कृतानि फेदित्येवरूपाणि अस्फुटानि चीत्कृतानि, दधाना–धारयन्ती, निशापिशाची–निशा रात्रिरेव पिशाची राक्षसी, कुतोऽपि–कस्माच्चित् अज्ञात प्रदेशात्, आगत्य इति शेष , व्यचरत्–परिबभ्राम । अत्रान्धकारस्य कार्ष्ण्य साधर्म्यात् केशै , तारकाणा भास्वररूपगोलाकारादिसाधर्म्यात् मणिभि , निशाया भीषकत्वादिसाधर्म्यात् पिशाच्या, उलूकशब्दाना च कार्कश्या मङ्गलध्वअकत्वादिसाधर्म्यात् फेत्कारै सह अभेदाध्यवसायात् रूपकालङ्कार । अभेदस्य च समासान्तर्गतत्वात् पूर्णाङ्गत्वाच्च समस्तमखण्ड रूपकमिदम् ।

भावार्थ—चारों ओर फैले हुए अन्धकार रूपी केशों से सुशोभित, तारे रूप हड्डियों की मणियों को गले में धारण किये हुए, तथा बहुत ऊंचे उठी हुई, उल्लुओं के शब्दरूपी भाय २ आवाजों से युक्त, रात्रि रूपी राक्षसी कहीं से आकर विचरण कर रही थी ॥६७॥

असमस्तमखण्ड रूपकमुदाहरति—

संसार एव कूपः सलिलानि विपत्तिजन्मदुःखानि ।
इह धर्म एव रज्जुस्तस्मादुद्धरति निर्मग्नान् ॥६८॥

अन्वय —ससार एव कूप , इह विपत्तिजन्मदु खानि सलिलानि, निर्मग्नान् धर्म एव रज्जु तस्मात् उद्धरति ।

पदार्थ —संसार –विश्व एव, कूप –मनुष्यै स्वय खनित प्रलाप गम्भीरो जलाशयविशेष , इह–अस्मिन् ससारकूपे, विपत्तिजन्मदु खानि– विपत्ते आपदा जन्म उत्पत्तिर्येषां तथाविधानि दु खानि कष्टानि, अथवा विपत्ति –आपत्, जन्म–मृत्वा पुनरुत्पत्ति , दु ख–मानसादिकी विविधा पीडा,

तेषां द्वन्द्वः, तानि एव, सलिलानि—जलानि, सन्तीति शेषः । निमग्नान्—तस्मिन् दुःखसलिले निमज्जितान् जनान्, धर्मः—सुकृतम्, एव रज्जुः—उद्धरणक्षमो गुणः, तस्मात्—संसारकूपस्थितदुःखजलात्, उद्धरति—उपरि तटं प्रत्याकर्षति, रक्षतीति यावत् । अत्र दुरवगाहत्वदुर्बोधतादिसाधर्म्यात् संसारकूपयोः, चापल्यादिसाधर्म्यात् सलिलदुःखयोः, पतितोद्धारणार्हत्वादिसाधर्म्याद् धर्मरज्ज्वोः तादात्म्याध्यवसानम्, तस्य च व्यस्तपदेषु सत्त्वात् पूर्णाङ्गत्वाच्च असमस्तमखण्डं रूपकमिदम् ।

भावार्थ—संसार ही कुआ है, इसमें विपत्ति, बार २ जन्म होना और दुःख ही जल हैं, इसमें डूबे हुए पुरुषों का धर्मरूप रज्जु ही उस से उद्धार करती है ॥६८॥

समस्तं खण्डं रूपकमुदाहरति—

> अधरं मुखेन नयनेन रुचिं
> सुरभित्वमाब्जमिव नासिकया ।
> नववर्णिनीवदनचन्द्रमस-
> स्तरुणा रसेन युगपन्निपपुः ॥६६॥

अन्वयः—तरुणाः रसेन नववर्णिनीवदनचन्द्रमसः अधरं मुखेन, रुचिं नयनेन, आब्जम् इव सुरभित्वं नासिकया युगपद् निपपुः ।

पदार्थः—तरुणाः—युवानः, रसेन—रागातिशयेन, निरतिशयप्रेम्णा, नववर्णिनीवदनचन्द्रमसः—नवा नवोढा या वर्णिनी कामिनी, तस्या वदनं मुखमेव चन्द्रमाः शशी तस्य, नववधूमुखचन्द्रस्येत्यर्थः, अधरम्—अधोभागगतमोष्ठम्, मुखेन—वदनेन, रुचिं—कान्तिमाभाम्, नयनेन—चक्षुषा, आब्जम्—अब्जं कमलं तस्मात्समुत्पन्नमाब्जं कमलसम्बन्धि, इव—कमलसौरभसदृशमित्यर्थः, सुरभित्वं—सौगन्ध्यम्, इष्टगन्धमिति यावत्, नासिकया—घ्राणेन, युगपत्—समकालमेव, निपपुः—नि शेषं यथा स्यात्तथा अपिबन् अनुबभूवुरिति भावः । अत्रोपमेयस्य वदनस्य चन्द्रेणोपमानेन सह आह्लादकत्ववर्तुलत्वादिसाधर्म्येण तादात्म्याध्यवसानाद् रूपकम्, तस्य च समासान्तर्गतत्वात्, उपमेयधर्माणां च 'अधरं मुखेन' 'रुचिं नयनेन' इत्यादिना खण्डशः प्रतिपादनाच्च समस्तं खण्डं रूपकमिदम् ।

भावार्थ—जिस अलंकार में, 'इव' 'यथा' इत्यादि सादृश्य बोधक पदों का ग्रहण न करने पर ही उपमेय अर्थ की उपमान अर्थ के साथ समानता प्रतीत हो जाय, उसे ही प्रतिवस्तूपमा नामक अलंकार कहते हैं ॥७१॥

प्रतिवस्तूपमामुदाहरति—

बहुवीरेऽप्यसावेको यदुवंशेऽद्भुतोऽभवत् ।
किं केतक्यां दलानि स्युः सुरभीण्यखिलान्यपि ॥७२॥

व्याख्यातमिदं पद्यं पञ्चषष्टितम(६५)सख्यायां चतुर्थपरिच्छेद एव । अत्र साधर्म्यबोधकानामिवादिपदानामसत्त्वेऽपि केतकीयदुवंशयोः दलवीरयोः व्यज्यमानवरत्वैकयोश्च उपमानोपमेययोः साधर्म्यं प्रतीयत एव । तस्मादियं प्रतिवस्तूपमा ॥७२॥

अधुना क्रमप्राप्तं भ्रान्तिमदलङ्कारं लक्षयति—

वस्तुन्यन्यत्र कुत्रापि तत्तुल्यस्यान्यवस्तुनः ।
निश्चयो यत्र जायेत भ्रान्तिमान् स स्मृतो यथा ॥७३॥

अन्वयः—यत्र अन्यत्र कुत्रापि वस्तुनि तत्तुल्यस्य अन्यवस्तुनः निश्चयो जायेत स भ्रान्तिमान् स्मृतः । यथा—

पदार्थ—यत्र-यस्मिन् अलङ्कारे, अन्यत्र-अन्यस्मिन् भिन्ने, कुत्रापि-कस्मिंश्चिदपि, वस्तुनि-पदार्थे, तत्तुल्यस्य-तत्समस्य, अन्यवस्तुनः-तदतिरिक्तपदार्थस्य, निश्चयः-तदात्मकत्वेन प्रतीतिः, जायेत-भवेत्, स-अलङ्कारः, भ्रान्तिमान्-एतदाख्यः, स्मृतः-उक्तः । यथा-अग्रिमपद्ये उदाहरति ।

भावार्थ—जिस अलंकार में, किसी भी अन्य वस्तु में, उसके समान अन्य वस्तु का निश्चय हो जाय, उसे भ्रान्तिमान् अलंकार कहते हैं । जैसे—॥७३॥

प्राकृतकाव्ये भ्रान्तिमन्तमुदाहरति—

हेमकमलं ति वअणे णअणे णीलुप्पलं ति पसुअच्छि ! ।
कुसुमं ति तुह हसिए णिवडति भमराणं रिंछोली ॥७४॥

अस्य संस्कृतम्—

हेमकमलमिति वदने नयने नीलोत्पलमिति प्रसृताक्षि ! ।
कुसुममिति तव हसिते निपतति भ्रमराणां श्रेणी ॥

अन्वयः—प्रसृताक्षि ! तव वदने हेमकमलम् इति, नयने नीलोत्पलम् इति, हसिते कुसुमम् इति भ्रमराणां श्रेणी निपतति।

पदार्थ—प्रसृताक्षि !–प्रसृते विस्तृते अक्षिणी नेत्रे यस्यास्तत्सम्बुद्धौ तथा, हे आयतलोचने !, तव–भवत्या, वदने–आनने, हेमकमल–सुवर्णपद्मम्, इति–एव निश्चित्य, नयने–नेत्रे, नीलोत्पल–नीलकमलम्, इति–तथा प्रतीत्य, हसिते–हास्ये, कुसुम–पुष्पम्, इति–एव ज्ञात्वा, भ्रमराणाम्–अलीनाम्, श्रेणी पङ्क्ति, निपतति–तव मुखं प्रति धावतीत्यर्थः । अत्र भ्रमराणां कामिनीमुखादौ हेमकमलादिसादृश्यतया मुखादिभिन्नाना हेमकमलादीनामेव निश्चयो जायते, एवञ्च अतस्मिंस्तद्बुद्धेरुद्भवात् भ्रान्तिमानलङ्कारः ।

भावार्थ—हे बड़ी २ आँखों वाली सुन्दरि ! तेरे मुख में कमल का नेत्र में नीलोत्पल का, और हँसी में फूल का निश्चय करके, भौंरों की पङ्क्ति तुम्हारे मुँह की ओर दौड़ी आ रही है ॥७४॥

अथाक्षेपमाक्षेपं लक्षयति—

उक्तिर्यत्र प्रतीतिर्वा प्रतिषेधस्य जायते ।
आचक्षते तमाक्षेपमलङ्कारं बुधा यथा ॥७५॥

अन्वय—यत्र प्रतिषेधस्य उक्तिः वा प्रतीतिः जायते, बुधा तम् आक्षेपम् अलङ्कारम् आचक्षते । यथा—

पदार्थ—यत्र–यस्मिन् अलङ्कारे, प्रतिषेधस्य–प्रत्याख्यानस्य उक्ति–कथनम्, वा–अथवा, प्रतीति–बोधः ज्ञानम्, जायते–भवति, बुधा–विद्वांस, तं–प्रतिषेधोक्तिप्रतीतिरूपम्, आक्षेपम्–एतदाख्यम्, अलङ्कारम्, आचक्षते–प्रतिपादयन्ति । यथा—अग्रिमपद्ये उदाहरणं दर्शयति ।

भावार्थ—जिस अलङ्कार में, प्रतिषेध का साक्षात् कथन किया जाय, अथवा वह बिना ही कथन के प्रतीयमान हो, विद्वज्जन उसे 'आक्षेप' अलङ्कार कहते हैं । जैसे—॥७५॥

प्रतिषेधोक्तिमूलमाक्षेपमुदाहरति—

इन्द्रेण किं यदि स कर्णनरेन्द्रसूनु-
रैरावतेन किमहो ! यदि तद्द्विपेन्द्रः ।

दम्भोलिनाप्यलमयं यदि तत्प्रतापः
स्वर्गोऽप्ययं ननु मुधा यदि तत्पुरी सा ॥७६॥

अन्वयः—यदि सः कर्णनरेन्द्रसूनुः, इन्द्रेण किम्? यदि तद्द्विपेन्द्रः, अहो! ऐरावतेन किम्? यदि अयं तत्प्रतापः, दम्भोलिना अपि अलम्, यदि सा तत्पुरी, ननु अयं स्वर्गोऽपि मुधा।

पदार्थः—यदि-चेत्, सः-प्रसिद्धः, कर्णनरेन्द्रसूनु-कर्णस्य तन्नाम्नो नरेन्द्रस्य भूपतेः सूनुः आत्मजः, जयसिंहदेव इत्यर्थः, अस्तीति शेषः, तदा इन्द्रेण-देवराजेन, किं-न किमपि प्रयोजनमस्तीत्यर्थः। यदि तद्द्विपेन्द्रः-तस्य जयसिंहदेवस्य द्विपेन्द्रो गजराजः, अस्ति, तदा अहो!-आश्चर्यम्, ऐरावतेन-तदाख्येन सुरपतिगजेन, किं-न किमपि प्रयोजनमित्यर्थः। यदि अयं साक्षाल्लोकैरनुभूयमानः, तत्प्रतापः-तस्य जयसिंहदेवस्य प्रतापस्तेजः, अस्ति, तदा दम्भोलिनापि-वज्रेणापि, अलं-न किंचित् फलमित्यर्थः। यदि सा-अतिप्रसिद्धा, तत्पुरी-तस्य देवस्य पुरी नगरी, विद्यते तदा ननु-निश्चयेन, अयं-शास्त्रैः प्रतिपाद्यमानः, स्वर्गोऽपि-सुरालयोऽपि, मुधा-व्यर्थ एव, सर्वथा निष्फल इत्यर्थः। अत्र जयसिंहदेवादीनां सत्त्वे इन्द्रादीनां प्रतिषेधः साक्षात् प्रतिपादितः, तस्मादयमाक्षेपोऽलङ्कार इति।

भावार्थ—यदि वह कर्ण महाराज का पुत्र जयसिंहदेव विद्यमान है, तो इन्द्र से क्या प्रयोजन? अर्थात् कुछ नहीं। यदि जयसिंहदेव का हाथी मौजूद है, तो इन्द्र के हाथी ऐरावत से क्या मतलब? यदि जयसिंहदेव का यह प्रसिद्ध प्रताप विद्यमान है, तब वज्र की क्या आवश्यकता? तथा उसकी प्रसिद्ध नगरी के होने पर यह स्वर्ग भी व्यर्थ है ॥७६॥

प्रतिषेधमतीतिमूलमाक्षेपमुदाहरति—

यस्यास्ति नरकक्रोडनिवासरसिकं मनः।
सोऽस्तु हिंसाऽनृतस्तेयतत्परः सुतरां जनः ॥७७॥

अन्वयः—यस्य मनः नरकक्रोडनिवासरसिकम् अस्ति, सः जनः सुतरां हिंसाऽनृतस्तेयतत्परः अस्तु।

पदार्थ—यस्य-पुरुषस्य, मनः-चेतः, नरकक्रोडनिवासरसिकं-नरकस्य

रौरवादे क्रोडे उत्सङ्गे मध्ये निवास स्थिति, तत्र रसिकम् अभिलापि, अस्ति-वर्तते, स –एवभूत, जन –पुरुष, सुतराम्–अतिशयेन स्वैरम्, हिंसाऽनृतस्तेय-तत्पर –हिंसा प्राणिघात, अनृत मिथ्याभाषणम्, स्तेय चौर्यकर्म, इत्येतेषु तत्परो निरत, सर्वात्मना सलग्न इत्यर्थ, अस्तु–भवतु। अत्र हिंसादीना साक्षात् प्रतिषेधाभावेऽपि, तेषा नरकनिवासफलप्रदर्शनेन प्रतिषेध प्रतीयते, तस्माद् गम्यप्रतिषेधनिबन्धनोऽयमाक्षेपाऽलङ्कार।

भावार्थ—जिस पुरुष का मन, नरक में निवास करने का अभिलाषी है, वह चाहे अवश्य ही हिंसा, मिथ्याभाषण तथा चोरी आदि नीच कर्मों में निरत रहा करे ॥७७॥

प्राकृतकाव्ये गम्यप्रतिषेधमूलमाक्षेपमुदाहरति—

इच्छन्ति जे ण किंत्तिं कुणन्ति करुणाकणंपि जे णेव।
ते धणजक्ख व्व णरा दिन्ति धणं मरणसमए वि ॥७८॥

अस्य संस्कृतम्—

इच्छन्ति ये न कीर्त्तिं कुर्वन्ति करुणाकणमपि ये नैव।
ते धनयक्षा इव नरा ददति धनं मरणसमयेऽपि ॥

अन्वय —ये कीर्त्तिं न इच्छन्ति, ये करुणाकणमपि नैव कुर्वन्ति, ते नरा धनयक्षा इव मरणसमयेऽपि धन ददति।

पदार्थ —ये–पुरुषाः, कीर्त्ति–यश, नेच्छन्ति–नाभिलषन्ति, ये च करुणाकणमपि–दयालेशमपि, नैव–न कथमपि, कुर्वन्ति–विदधति, ते–एवम्भूता कृपणा, नरा –पुरुषा, धनयक्षा –धनरक्षकदेवयोनिविशेषा, इव, मरणसमयेऽपि–मृत्युकाल एव, धन ददति–द्रव्यसम्पत्ति बलात् परि त्यज्य प्रयान्तीत्यर्थ। अत्र यशोलिप्सुना कारुणिकेना कार्पण्य साक्षात् न प्रतिषिध्यते अपि तु मृत्युसमये बलाद् धनपरित्यागप्रदर्शनेन समुचितकाले दानाकरणरूपस्य कार्पण्यस्य प्रतिषेधो गम्यते। तस्माद् गम्यप्रतिषेधमूलोऽयमाक्षेपालङ्कार।

भावार्थ—जिनको यश की चाह नहीं है और जो न लेशमात्र दया ही दिखलाते हैं, उन्हें भी, धन रक्षक यक्षों की तरह, आखिर मरण समय में वह धन छोड़ना ही पड़ता है ॥७८॥

क्रमप्राप्तं संशयं लक्षयति—

इदमेतदिदं वेति साम्याद् बुद्धिर्हि संशयः।
हेतुभिर्निश्चयः सोऽपि निश्चयान्तः स्मृतो यथा ॥७६॥

अन्वयः—साम्यात् हि एतद् इदम्, इदं वा इति बुद्धिः संशयः, सोऽपि हेतुभिः निश्चयः निश्चयान्तः स्मृतः। यथा—

पदार्थः—साम्यात्—साधारणादीनाम् आरोहपरिणाहादीनां धर्माणां सादृश्यात्, हि—एव, एतत्—पुरोदृश्यमानं वस्तु, इदं—स्थाणुरूपम्, इदं वा—पुरुषरूपं वा, इति—एवंप्रकारेण या, बुद्धिः—उभयकोट्यवगाहिनी धीः, सा एव संशयः—तदाख्योऽलंकारो भवतीति शेषः। सोऽपि—एवम्भूतः, संशय एव, हेतुभिः—कारणैः, निश्चयः—असन्दिग्धात्मना निर्णयरूपेण परिणतः, निश्चयान्तः—निश्चयो निर्णयोऽन्तेऽवसाने यस्य तादृशः, स्मृतः—कथितः। यथा—अग्रिमश्लोकाभ्यां संशयमुदाहरतीत्यर्थः।

भावार्थ—साधारण आदि धर्मों के समान होने से ही, 'सामने दीखती हुई वस्तु, अमुक है या अमुक है' इस प्रकार का जो ज्ञान होता है, उसे संशय कहते हैं। यह संशय ही जब कारणों के द्वारा निश्चयरूप में परिणत हो जाय, तब उसे 'निश्चयान्त संशय' कहते हैं ॥७९॥

तत्र तावत् शुद्धसंशयमुदाहरति—

किं केशपाशः प्रतिपक्षलक्ष्म्याः
किं वा प्रतापानलधूम एषः।
दृष्ट्वा भवत्पाणिगतं कृपाण-
मेवं कवीनां मतयः स्फुरन्ति ॥८०॥

अन्वयः—भवत्पाणिगतं कृपाणं दृष्ट्वा कवीनां मतयः एवं स्फुरन्ति, एषः किं प्रतिपक्षलक्ष्म्याः केशपाशः? वा किं प्रतापानलधूमः?।

पदार्थ—हे राजन्! इत्यध्याहार्यम्, भवत्पाणिगतं—भवतः श्रीमतस्तव पाणौ हस्ते गतं प्राप्तं विद्यमानं वा, कृपाणम्—असिम्, दृष्ट्वा—विलोक्य, कवीनां—क्रान्तदर्शिनां विदुषाम्, मतयः—बुद्धयः, एवं—वक्ष्यमाणप्रकारेण, स्फुरन्ति—समुदयन्ति। तमेव प्रकारमाह—एषः—कृपाणः, किम्—इति पदं संशयं

द्योतयति, प्रतिपक्षलक्ष्म्याः-प्रतिपक्षस्य शत्रोः लक्ष्मी श्रीः, तस्या केशपाशः-अलकसमूहः, वा-अथवा, किम्, प्रतापानलधूमः-प्रतापस्तेज एवानलोऽग्निस्तस्य धूमः कज्जलशिखा इत्यर्थः। अत्र कृपाणे विषद्वकोटिद्वयस्य तुल्यबलत्वेन भानात् निश्चयस्य चानुदयात् शुद्धसंशयालङ्कारः।

भावार्थ—हे राजन्! आपके हाथमें विद्यमान तलवार को देखकर कवियों का यह खयाल होता है कि, क्या यह शत्रु की राजलक्ष्मी का केश समूह है? या आपके प्रताप रूपी अग्नि की धूमशिखा है? ॥८०॥

निश्चयान्तसंशयमुदाहरति—

इन्द्रः स एष यदि किं न सहस्रमक्ष्णां
लक्ष्मीपतिर्यदि कथं न चतुर्भुजोऽसौ।
आः! स्यन्दनध्वजधृतोद्धुरताम्रचूडः
श्रीकर्णदेवनृपसूनुरयं रणाग्रे ॥८१॥

**अन्वयः—यदि एषः स इन्द्रः, अक्ष्णां सहस्रं किं न? यदि असौ लक्ष्मीपतिः, चतुर्भुजः कथं न? आः! अयं रणाग्रे स्यन्दनध्वजधृतोद्धुरताम्रचूडः श्रीकर्णदेवनृपसूनुः।**

पदार्थ—यदि-चेत्, एष-पुरतो वर्तमानः, सः-लोकप्रसिद्धः, इन्द्रः-देवराजः, तर्हि अक्ष्णां-चक्षुषाम्, सहस्रं-तावत्संख्याविशिष्टत्वम्, किं-कस्मात् कारणात्, न नास्ति?। यदि असौ-एषः, लक्ष्मीपतिः-विष्णुः, तर्हि चतुर्भुजः-चत्वारः चतुःसंख्याकाः भुजाः बाहवो यस्य तथाभूतः, कथं-कस्मात् कारणात्, न-नास्ति? आः!-अपि ज्ञातम्, अयं रणाग्रे-संग्रामस्य पुरतो दृश्यमानोऽसौ, स्यन्दनध्वजधृतोद्धुरताम्रचूडः-स्यन्दनस्य रथस्य ध्वजे पताकायां धृतः अवस्थापितः उद्धुरः उत्कटः ताम्रचूडः कुक्कुटो यस्य तथाभूतः, कुक्कुटध्वज इत्यर्थः। श्रीकर्णदेवनृपसूनुः-श्रिया युक्तस्य कर्णदेवस्य भूपतेः पुत्रः, जयसिंहदेवः वर्तते इति शेषः। अत्र सहस्रनेत्राभावान्नायमिन्द्रः, चतुर्भुजत्वाभावान्नाय विष्णुरिति निश्चयेन एकस्य पक्षस्य प्राबल्यात् अयं निश्चयान्तसंशयो नामालङ्कारः।

भावार्थ—अगर यह इन्द्र है, तो इसके हजार आंख क्यों नहीं! अगर विष्णु है, तो चतुर्भुज क्यों नहीं? ओह! संग्राम में आगे बढ़ता हुआ,

रथ की ध्वजा में मुर्गा लगाये हुए, यह तो, श्री कर्णदेव महाराज का पुत्र जयसिंहदेव है ॥८१॥

क्रमप्राप्तं दृष्टान्तं लक्षयति—

अन्वयख्यापनं यत्र क्रियया स्वतदन्ययोः ।
तं दृष्टान्तमिति प्राहुरलङ्कारं मनीषिणः ॥८२॥

अन्वयः—यत्र क्रियया स्वतदन्ययोः अन्वयख्यापनम्, मनीषिणः तम् अलङ्कारं दृष्टान्तम् इति प्राहुः ।

पदार्थ—यत्र–यस्मिन्नलङ्कारे, क्रियया–व्यापारेण, स्वतदन्ययोः–स्वस्य प्रकृतस्य तदन्यस्य अप्रकृतस्य च, अन्वयख्यापनं–परस्परयोग्यगुणसम्बन्धकथनम्, भवतीति शेषः । मनीषिणः–विद्वांसः, तं–तथाविधम्, अलङ्कारम्, दृष्टान्तमिति–दृष्टान्तसंज्ञकमित्यर्थः । प्राहुः–कथयन्ति ।

भावार्थ—जिस अलंकार में क्रिया [ व्यापार ] के द्वारा, अपने और अपने से भिन्न के योग्यगुण के आधार पर परस्पर सम्बन्ध का कथन होता है, विद्वान् उसे दृष्टान्त नामक अलंकार कहते हैं ॥८२॥

दृष्टान्तमुदाहरति—

पतितानां संसर्गं त्यजन्तु दूरेण निर्मला गुणिनः ।
इति कथयन् जरतीनां हारः परिहरति कुचयुगलम् ॥८३॥

अन्वयः—निर्मला गुणिनः पतितानां संसर्गं दूरेण त्यजन्तु, इति कथयन् जरतीनां हारः कुचयुगलं परिहरति ।

पदार्थ—निर्मलाः–दोषरहिताः, गुणिनः–सज्जनाः, सूत्रग्रथिताश्च, पतितानां–पापिनाम्, शिथिलानाञ्च, संसर्गं–सहवासम्, दूरेण–दूरादेव, त्यजन्तु–परिहरन्तु । इति–एवंप्रकारेण, कथयन्–प्रकटयन्, जरतीनां–वृद्धानां नारीणाम्, हारः–रत्ननिर्मितकण्ठाभरणम्, कुचयुगलं–स्तनयुग्मम्, परिहरति–परित्यजति । अत्र यथा जरतीनां स्तनयोः शोभिन्यान् तत्र गुणवान् हारो न शोभते, तथैव पतितैः सह गुणिनां संसर्गोऽपि न शोभावह इति पतितसंसर्गपरिहाररूपक्रियया हारगुणिनोः परस्पर सम्बन्धः प्रतीयते, तस्मादयं दृष्टान्तालङ्कारः ।

भावार्थ—दोषशून्य गुणी व्यक्ति, पतितों के साथ संसर्ग को दूर से ही

परित्याग कर दे, यह प्रकट करता हुआ बूढी औरतों का हार, स्तन युगम को छोड़ रहा है ॥८३॥

क्रमप्राप्तं व्यतिरेकं लक्षयति—

केनचिद् यत्र धर्मेण द्वयोः संसिद्धसाम्ययोः ।
भवत्येकतराधिक्यं व्यतिरेकः स उच्यते ॥८४॥

अन्वयः—यत्र केनचिद् धर्मेण संसिद्धसाम्ययोः द्वयोः एकतराधिक्यं भवति, सः व्यतिरेकः उच्यते ।

पदार्थ—यत्र–यस्मिन्नलङ्कारे, केनचित्–येन केनापि उत्कर्षविधायकेन, धर्मेण–गुणादिना, संसिद्धसाम्ययोः–संसिद्धं सर्वप्रमाणादिभिः निश्चयं गतं साम्यं सादृश्यं ययोस्तथाभूतयोः, द्वयोः–उपमानोपमेययोरुभयोरपि मध्ये, एकतराधिक्यम्–एकतरस्य उपमानस्य उपमेयस्य वा, आधिक्यम्–उत्कर्षं, भवति–जायते, सः–एवम्भूतोऽलङ्कारः, व्यतिरेकः–एतदाख्यः, उच्यते–कथ्यते ।

भावार्थ—जिस अलङ्कार में, किसी उत्कर्ष विधायक धर्म के द्वारा, लोक तथा प्रमाणसिद्ध सादृश्य वाले दो धर्मियों में से किसी एक का उत्कर्ष बताया जावे, उसे व्यतिरेक अलङ्कार कहते हैं ॥८४॥

व्यतिरेकमुदाहरति—

अस्त्वस्तु पौरुषगुणाज्जयसिंहदेव-
पृथ्वीपतेर्मृगपतेश्च समानभावः ।
किन्त्वेकतः प्रतिभटाः समरं विहाय
सद्यो विशन्ति वनमन्यमशङ्कमानाः ॥८५॥

अन्वयः—जयसिंहदेवपृथ्वीपतेः मृगपतेश्च पौरुषगुणात् समानभावः अस्तु अस्तु, किन्तु एकतः प्रतिभटाः समरं विहाय अन्यम् अशङ्कमानाः सद्यः वनं विशन्ति ।

पदार्थ—जयसिंहदेवपृथ्वीपतेः–जयसिंहदेवनाम्नः भूपतेः, मृगपतेः–सिंहस्य च, पौरुषगुणात्–पराक्रमादिगुणसम्बन्धात्, समानभावः–साम्यम्, अस्तु अस्तु–भवतु भवतु, किन्तु–परन्तु, एकतः–एकस्मात् जयसिंहदेवनृपात्, भीता इति शेषः, प्रतिभटाः–शत्रुसैनिकाः, समरं–संग्रामस्थलम्, विहाय–परित्यज्य, अन्यं–सिंहम्, अशङ्कमानाः–अविचारयन्तः, सिंहाद् भयमनन्य

मानाः, सद्यः–सहसैव, वनम्–अरण्यम्, विशन्ति–अवगाहन्ते, वनं प्रविश्य यथाकथञ्चिदात्मानं विनोदयन्तो जीवनकालं यापयन्तीत्यर्थः। अत्र संग्रामे सिंहापेक्षया राज्ञः शौर्यातिशयख्यापनाद् व्यतिरेकालङ्कारः।

भावार्थ—महाराज जयसिंहदेव और सिंह की समानता पराक्रम के कारण भले ही कही जावे, परन्तु एक ओर जयसिंहदेव से डरे हुए शत्रु के सैनिक, दूसरे सिंह के डर की कुछ भी परवाह न करते हुए, फौरन ही जङ्गल में घुस जाते हैं ॥८५॥

अपसरप्राप्तामपह्नुतिं लक्षयति—

नैतदेतदिदं ह्येतदित्यपह्नवपूर्वकम्।
उच्यते यत्र सादृश्यादपह्नुतिरियं तथा ॥८६॥

अन्वयः—यत्र सादृश्यात् एतत् एतत् न, एतत् इदं हि, इति अपह्नवपूर्वकम् उच्यते, इयम् अपह्नुतिः। यथा—

पदार्थः—यत्र–यस्मिन्नलंकारे, सादृश्यात्–समानधर्मत्वात्, एतत्–इदं प्रतीयमानं वस्तु, एतद्–तद्रूपम्, न–नास्ति, किन्तु, एतत्–पूर्वोक्तम्, इदं हि–इदमेव, अन्यदात्मकं निश्चितं वस्तु इत्यर्थः, इति–एवंप्रकारेण यत्, अपह्नवपूर्वकं–पूर्वोक्तनिराकरणपुरस्सरम्, उच्यते–प्रतिपाद्यते, इयम्–एवंभूता, अपह्नुतिः–एतदाख्योऽलंकार इत्यर्थः। यथा—उदाहरणमपह्नुतेरग्रिमश्लोक इत्यर्थः।

भावार्थ—जिस अलंकार में, समानधर्म होने के कारण, 'यह वस्तु यह नहीं है, किन्तु यह, यह है' इस प्रकार वस्तु की वास्तविकता को झुठलाते हुए, जो प्रतिपादन किया जाय, उसे अपह्नुति अलंकार कहते हैं। जैसे ॥८६॥

अपह्नुतिमुदाहरति—

नैतन्निशायां शितसूच्यभेद्यमन्धीकृतालोकनमन्धकारम्।
निशागमप्रस्थितपञ्चबाणसेनासमुत्थापित एष रेणुः॥८७॥

अन्वयः—निशायां शितसूच्यभेद्यम् अन्धीकृतालोकनम् एतत्, अन्धकारं न, एषः निशागमप्रस्थितपञ्चबाणसेनासमुत्थापितः रेणुः।

पदार्थः—निशायां–रात्रौ, शितसूच्यभेद्यं–शिता तीक्ष्णा या सूची

सीवनादिसाधनभूताऽय-शलाका, तयापि अभेद्यम् अच्छेद्यम्, नितान्त घ मित्यर्थः। अन्धीकृतालोकनम्—अन्धीकृतं दृक्शक्तिरहितं कृतम् आलोकनं द नेन्द्रियं येन तथाभूतम्, एतत्—दृष्ट्यादिप्रतिबन्धकम्, अन्धकारं-तम, न नास्ति,[1] किन्तु एष—पुरतो वर्त्तमानो वस्तुविशेषः, निशागमप्रस्थितपञ्च सेनासमुत्थापितः—निशाया रात्रेः आगमेन प्राप्त्या प्रस्थिता युद्धार्थं चलिता। पञ्चबाणसेना मदनचमू तया समुत्थापितः समुत्क्षिप्त पादाघातैरूर्ध्वी इत्यर्थः। रेणु—धूलिः, वर्त्तत इति शेष। अत्र यथाभूतवस्तुनोऽन्धकार अपह्नवेन, दृष्टिविघातकत्वादिसाम्यमादाय अतथाभूतधूलिपटलस्य प्रति दनाद् अपह्नुतिरलङ्कारः।

भावार्थ—रात में, सुई से भी न भेदने योग्य अर्थात् अत्यन्त गहरा है आखों को अन्धिया देने वाला यह, अन्धकार नहीं है, किन्तु यह, र के आजाने के कारण, युद्ध के लिये चली हुई कामदेव की सेना के द्वा उठाई हुई धूल है ॥८७॥

अथसरप्राप्तां तुल्ययोगितां लक्षयति—

> उपमेयं समीकर्त्तुमुपमानेन योज्यते।
> तुल्यैककालक्रियया यत्र सा तुल्ययोगिता ॥८८॥

अन्वयः—यत्र तुल्यैककालक्रियया उपमानेन उपमेय समीकर्तुं योज्यते, सा तुल्ययोगिता।

पदार्थ—यत्र-यस्मिन् अलङ्कारे, तुल्यैककालक्रियया—तुल्या सदृशी एक काला एकस्मिन्नेव कालेऽनुष्ठीयमाना या क्रिया व्यापारः तया, उपमानेन—प्रवर्ण नीयेन पूर्वसिद्धवस्तुना सह, उपमेयं—वर्णनीयं वस्तु, समीकर्तुं—एकीकर्तुम्, योज्य ते—उपन्यस्यते, सा—एवम्भूता, तुल्ययोगिता—तदाख्योऽलङ्कारो भवतीति शेष।

भावार्थ—जिस अलङ्कार में, समान और एक काल में होने वाली किसी क्रिया के द्वारा, उपमान के साथ उपमेय की बराबरी को कथन किया जावे, उसे तुल्ययोगिता कहते हैं ॥८८॥

तुल्ययोगितामुदाहरति—

> तमसा लुप्यमानानां लोकेऽस्मिन् साधुवर्त्मनाम्।
> प्रकाशनाय प्रभुवा मानोस्तव च दृश्यते ॥८९॥

**अन्वयः—अस्मिन् लोके तमसा लुप्यमानानां साधुवर्त्मनां काशनाय भानोः तव च प्रभुता दृश्यते ।**

पदार्थ —अस्मिन्–इह, लोके–संसारे, तमसा–अन्धकारेण अज्ञानेन च ्प्यमानानाम्–अदर्शनं प्राप्यमाणानाम् दुर्जनैर्वा कालुष्यं नीयमानानाम्, ाधुवर्त्मनां–सरलमार्गाणाम्, सज्जनानुष्ठितसदाचारपद्धतीनां च, प्रकाश- ाय–द्योतनाय, पुन संस्थापनाय च, भानो –सूर्यस्य, तव–भवतश्च जिनस्य, ाज्ञो वा कस्यचित्, प्रभुता–सामर्थ्यम्, दृश्यते–ज्ञायते । अत्रोपमेयं जिनो ाजा वा कश्चित्, उपमान सूर्य , तयो तुल्यया समानकालिक्या च प्रकाशन- क्रियया समीकरणं निरूप्यते, तस्मादत्र तुल्ययोगिताऽलङ्कार ।

भावार्थ—इस संसार में, अन्धकार से अथवा अज्ञान या पापों से अदृश्य होते हुए या कलुषित किये जाते हुए सरल मार्गों को अथवा साधुजनों के आचार रूप मार्ग को प्रकाशित करने के लिए सूर्य का या आपका सामर्थ्य ही देखा जाता है ॥८९॥

अथसरप्राप्तामुत्प्रेक्षां लक्षयति—

> कल्पना काचिदौचित्याद् यत्रार्थस्य सतोऽन्यथा ।
> द्योतितेवादिभिः शब्दैरुत्प्रेक्षा सा स्मृता यथा ॥९०॥

**अन्वयः—यत्र सत अर्थस्य औचित्यात् अन्यथा काचित् कल्पना इवादिभिः शब्दैः द्योतिता, सा उत्प्रेक्षा स्मृता। यथा—**

पदार्थ —यत्र–यस्मिन्नलङ्कारे, सत –विद्यमानस्य, अर्थस्य–वस्तुन, औचित्यात्–योग्यत्वात् आनुकूल्यात्, अन्यथा–भिन्नप्रकारा, काचित्–कापि अनिर्दिष्टरूपा, कल्पना–सम्भावना, इवादिभि –इव-मन्ये ध्रुव प्राय प्रभृतिभि , शब्दै –शब्दै , द्योतिता–प्रकाशिता, उक्ता, सा उत्प्रेक्षा–तन्नामकोऽलङ्कार , स्मृता–प्रतिपादिता । यथा–उदाहरणं वक्ष्यमाणश्लोक इत्यर्थ ।

उत्प्रेक्षामुदाहरति—

नभस्तले किञ्चिदिव प्रविष्टा-
श्चकाशिरे चन्द्ररुचिप्ररोहाः ।
जगद् गिलित्वा हसतः प्रमोदाद्
दन्ता इव ध्वान्तनिशाचरस्य ॥६१॥

अन्वयः—नभस्तले किञ्चिदिव प्रविष्टाः चन्द्ररुचिप्ररोहाः जगद् गिलित्वा प्रमोदाद् हसतः ध्वान्तनिशाचरस्य दन्ता इव चकाशिरे ।

पदार्थ—नभस्तले—आकाशप्रदेशे, किञ्चिदिव—स्वल्पमिव, प्रविष्टा—उदिता इत्यर्थ, चन्द्ररुचिप्ररोहा—चन्द्रस्य निशापते रुचिप्ररोहा किरणाङ्कुरा, जगत्—लोकम्, गिलित्वा—ग्रसित्वा, प्रमोदात्—हर्षात्, हसत—हास्य विदधत, ध्वान्तनिशाचरस्य—ध्वान्त तम एव निशाचरो राक्षस, तस्य, दन्ता—दशना, इव—इत्युत्प्रेक्षायाम्, उभयो शुभ्रत्वसाम्यादिति भाव । चकाशिरे—शुशुभिरे। अत्र विद्यमानस्य चन्द्रमयूखरूपस्यार्थस्य दन्तरूपेण कल्पना इवशब्देन द्योत्यते इत्युत्प्रेक्षाऽलङ्कार ।

भावार्थ—आकाशप्रदेश में कुछ २ उदय को प्राप्त हुई २ चन्द्रमा की किरणें, संसार को निगल कर हर्ष से हँसते हुए अन्धकार रूपी राक्षस के दाँतों की तरह मानों सुशोभित हुई ॥६१॥

क्रमप्राप्तमर्थान्तरन्यासं लक्षयति—

उक्तसिद्ध्यर्थमन्यार्थन्यासो व्याप्तिपुरःसरः ।
कथ्यतेऽर्थान्तरन्यासः श्लिष्टोऽश्लिष्टश्च स द्विधा ॥६२॥

अन्वय—उक्तसिद्ध्यर्थं व्याप्तिपुरःसरः अन्यार्थन्यासः, अर्थान्तरन्यासः कथ्यते । सः श्लिष्टः अश्लिष्टश्च द्विधा ।

पदार्थ—उक्तसिद्ध्यर्थम्—उक्तस्य प्रतिपादितस्यार्थस्य सिद्ध्यर्थं प्रामाण्यबोधनार्थम्, व्याप्तिपुरःसर—युक्तिपूर्वक, अन्यार्थन्यास—अन्यस्य अपरस्य अर्थस्य वस्तुनो न्यास कथनम्, अर्थान्तरन्यास एतदाख्योऽलङ्कार, कथ्यते—उच्यते। स—अर्थान्तरन्यास, श्लिष्ट—श्लेषयुक्त, अश्लिष्ट—श्लेषरहितश्च, द्विधा—द्विप्रकारको भवतीति शेष ।

भावार्थ—कहे हुए अर्थ की सिद्धि के लिये, प्रमाणपूर्वक अन्य अर्थ का कथन करना, अर्थान्तरन्यास नामक अलङ्कार कहाता है। वह श्लेषयुक्त और श्लेषरहित दो प्रकार का होता है ॥८२॥

**प्रथमं श्लेषमूलमर्थान्तरन्यासमुदाहरति—**

**शोणत्वमक्ष्णामसिताब्जभासां गिरां प्रचारस्त्वपरप्रकारः।**
**बभूव पानान्मधुनो वधूनामचिन्तनीयो हि सुराऽनुभावः ॥८३॥**

**अन्वयः—वधूनां मधुनः पानात् असिताब्जभासाम् अक्ष्णां शोणत्वं तु गिरां प्रचारः अपरप्रकारो बभूव, हि सुरानुभावः अचिन्तनीयः।**

पदार्थ—वधूनां-कामिनीनाम्, मधुनः-मद्यस्य, पानात्-सेवनात्, असिताब्जभासां-नीलकमलकान्तीनाम्, अक्ष्णां-चक्षुषाम्, शोणत्वं-रक्तवर्णत्वम्, तु-तथा, गिरां-वाणीनाम्, प्रचारः-प्रयोगः, अपरप्रकारः-भिन्नरूपः, पूर्वविपरीत इत्यर्थः, बभूव-समजायत। हि-यतः, सुरानुभावः-सुरया मद्यस्य, अन्यत्र सुराणां देवानां च अनुभावः प्रभावः, अचिन्तनीयः-अतर्कणीयः कल्पनातीत इत्यर्थः। अत्र 'सुरानुभावः' इति पदे सुरासुरशब्दाभ्यां मद्य देवतारूपार्थद्वयबोधात् श्लेषः, मद्यसेवनजनितस्य नेत्ररक्तिमस्वरविकृतिरूपस्य उक्तस्यार्थस्य सिद्ध्यर्थम्, "अचिन्तनीयो हि सुरानुभावः" इत्यन्यार्थकथनम्, तस्मादयं श्लेषमूलोऽर्थान्तरन्यासोऽलङ्कारः।

भावार्थ—मद्य पीने से कामिनियों की नीले कमल के समान कान्ति वाली आँखें लाल हो गईं, और आवाज लड़खड़ा गई। सचमुच सुरा [मद्य] का, [तथा सुरों—देवताओं का] प्रभाव अचिन्तनीय होता है ॥८३॥

**अथाश्लिष्टमर्थान्तरन्यासमुदाहरति—**

**शुण्डादण्डैः कम्पिताः कुञ्जराणां**
**पुष्पोत्सर्गं पादपाश्चारु चक्रुः।**
**सम्भाकाराः किं प्रयच्छन्ति किञ्चित्**
**क्रान्ता यावन्नोद्धतैर्गीतशङ्कम् ॥८४॥**

**अन्वयः—पादपाः कुञ्जराणां शुण्डादण्डैः कम्पिताः चारु**

पुष्पोत्सर्गं चक्रुः, स्तब्धाकाराः उद्धतैः वीतशङ्कं यावत् न क्रान्ताः, [तावत्] किञ्चित् प्रयच्छन्ति किम् ? ।

पदार्थ—पादपाः–वृक्षाः, कुञ्जराणां–गजानाम्, शुण्डादण्डैः–कर लगुडैः, कम्पिताः–व्याधूताः, चारु–शोभनं यथा स्यात् तथा, पुष्पोत्सर्गं–कुसुमवर्षणम्, चक्रुः–विदधुः । यतो हि स्तब्धाकाराः–स्तब्धचेष्टारहित आकार आकृतिर्येषां तथोक्ताः जडाः निर्बाधाः इति यावत्, उद्धतैः–प्रगल्भैः शक्तिशालिभिः, वीतशङ्कं–निःशङ्कं निर्भयं यथा स्यात् तथा, यावत्–यत्कालपर्यन्तम्, न क्रान्ताः–नाभिभूताः, भवन्तीति शेषः, तावत्–तत्कालपर्यन्तम्, किञ्चित्–किमपि वस्तु, प्रयच्छन्ति–वितरन्ति किम् ? न किमपि प्रयच्छन्तीत्यर्थः । अत्र पूर्वार्द्धेन प्रतिपादितस्यार्थस्य सिद्ध्यर्थं श्लिष्यर्थरहितेनोत्तरार्द्धेन अर्थान्तरस्य कथनाद् अश्लेषमूलोऽयमर्थान्तरन्यासः ।

भावार्थ—हाथियों की सूँड़ों से हिलाये हुए वृक्षों ने अच्छी तरह पुष्प वर्षा की, क्योंकि कोई भी जड़ अर्थात् ज्ञानहीन व्यक्ति, शक्तिशाली प्रगल्भ व्यक्तियों के द्वारा निर्भय होकर जब तक दबाया नहीं जाता, तब तक क्या कुछ देता है ? ॥९४॥

सम्प्रति समासोक्तिं लक्षयति—

उच्यते वक्तुमिष्टस्य प्रतीतिजननक्षमम् ।
सधर्मं यत्र वस्त्वन्यत् समासोक्तिरियं यथा ॥९५॥

अन्वयः—यत्र वक्तुम् इष्टस्य प्रतीतिजननक्षमं सधर्मम् अन्यत् वस्तु उच्यते, इयं समासोक्तिः । यथा—

पदार्थ—यत्र–यस्मिन् अलङ्कारे, वक्तुं–कथितुम्, इष्टस्य–अभिलषितस्य, विवक्षितस्य वस्तुन इत्यर्थः, प्रतीतिजननक्षमं–बोधोत्पादनसमर्थम्, सधर्मं–समानधर्मयुक्तम्, अन्यत्–अतिरिक्तम्, वस्तु–पदार्थः, उच्यते–कथ्यते, इयम्–एषा, समासोक्तिः–तदाख्योऽलङ्कार इत्यर्थः । यथा–अग्रिम पद्येन तामुदाहरतीत्यर्थः ।

भावार्थ—जिस अलङ्कार में, विवक्षित वस्तु का बोध कराने में समर्थ कोई अन्य वस्तु कही जाय, उसे समासोक्ति अलङ्कार कहते हैं। जैसे—॥९५॥

समासोक्तिमुदाहरति—

मधुकर ! मा कुरु शोकं विचर करीरद्रुमस्य कुसुमेषु ।
घनतुहिनपातदलिता कथं नु सा मालती मिलति ॥६६॥

अन्वयः—मधुकर ! शोकं मा कुरु, करीरद्रुमस्य कुसुमेषु विचर, घनतुहिनपातदलिता सा मालती नु कथं मिलति ? ।

पदार्थः—मधुकर !—हे भ्रमर ! शोकं-शुचं दुःखं वा, मा कुरु—न विधेहि, मा विलपेत्यर्थः । करीरद्रुमस्य—क्रकरपादपस्य, 'करील' इति लोके ख्यातस्य निष्पत्रकण्टकितविशेषस्य, कुसुमेषु—पुष्पेषु, विचर—पर्यट, घनतुहिनपातदलिता—घनं निबिडं यत्तुहिनं हिमं तस्य पातेन वर्षणेन दलिता विनष्टा, सा—त्वयाऽनुभूता, मालती—जातिपुष्पम्, नु—भोः, कथं—केन प्रकारेण, मिलति—पुनः संगता भवतीत्यर्थः । अत्र मृतपत्नीकस्त्वं परित्यज्य शोकमन्याम् विहर इति विवक्षितस्यार्थस्य प्रतीतये तत्सदृशधर्मस्य भ्रमरमालत्यादिरूपस्यान्यवस्तुनोऽभिधानात् समासोक्तिरलङ्कारः ।

भावार्थ—अरे भौंरे ! शोक मत कर, करील वृक्ष के फूलों में विचरण कर, भारी पाला पड़ने से नष्ट हुई वह मालती अब कहां मिल सकती है ? ॥६६॥

विभावनां लक्षयति—

विना कारणसद्भावं यत्र कार्यस्य दर्शनम् ।
नैसर्गिकगुणोत्कर्षभावनात् सा विभावना ॥६७॥

अन्वयः—यत्र कारणसद्भावं विना नैसर्गिकगुणोत्कर्षभावनात् कार्यस्य दर्शनं सा विभावना ।

पदार्थ.—यत्र—यस्मिन्नलंकारे, कारणसद्भावं—हेतुसत्ताम्, विना—अन्तरेण, नैसर्गिकगुणोत्कर्षभावनात्—स्वाभाविकगुणाधिक्यस्य प्रत्यायनात्, कार्यस्य—कर्मणः, दर्शनं—ज्ञानम्, सा—एवंभूता, विभावना—तदाख्योऽलङ्कारः, कथ्यत इति शेष ।

भावार्थ—जिस अलंकार में कारण के बिना ही स्वाभाविक गुणाधिक्य के ज्ञान से, कार्य का बोध हो जाए, उसे विभावना अलंकार कहते हैं ॥६७॥

विभावनामुदाहरति—

श्रनध्ययनविद्वांसो निर्द्रव्यपरमेश्वराः ।

श्रनलंकारसुभगाः पान्तु युष्मान् जिनेश्वराः ॥९८॥

श्रन्वय.—श्रनध्ययनविद्वांसः निर्द्रव्यपरमेश्वराः श्रनलङ्कारसुभगा. जिनेश्वराः युष्मान् पान्तु।

पदार्थ —अनध्ययनविद्वांस —न विद्यते अध्ययन पठन येषा ते, तादृशा अपि विद्वांस पण्डिता, अध्ययनेन विनापि ज्ञानवन्त इत्यर्थ । निर्द्रव्यपरमेश्वरा –निर्गत द्रव्य धन येभ्यस्ते निर्द्रव्या निर्धना इत्यर्थ । तादृशा अपि परमेश्वरा अतिशयैश्वर्यशालिन इत्यर्थ । अनलङ्कारसुभगा –न सन्ति अलङ्कारा आभरणानि येषा तथाभूता अपि सुभगा कल्याणदर्शना सौन्दर्यविशिष्टा इत्यर्थ । जिनेश्वरा –श्रेष्ठा अर्हन्त , युष्मान्–भवत , पान्तु–रक्षन्तु । अत्र अध्ययनादिरूपतत्तत्कारणाभावेपि विद्वत्तादिरूपतत्तत्कार्यं जिनेश्वराणां नैसर्गिकगुणोत्कर्षभावनया दृश्यते, तस्माद् विभावनालङ्कार ।

भावार्थ—बिना ही अध्ययन के विद्वान्, धन के बिना ही अत्यन्त ऐश्वर्यशाली, आभूषणों के बिना ही प्रियदर्शन अथवा सुन्दर जिनेश्वर आपकी रक्षा करें ॥९८॥

क्रमप्राप्तं दीपकं लक्षयति—

आदिमध्यान्तवर्त्यैकपदार्थेनार्थसंगतिः ।

वाक्यस्य यत्र जायेत तदुक्तं दीपकं यथा ॥९९॥

अन्वय —यत्र वाक्यस्य आदिमध्यान्तवर्त्यैकपदार्थेन अर्थसंगतिः जायेत, तद् दीपकम् उक्तम् । यथा—

पदार्थ —यत्र–यस्मिन्नलङ्कारे, वाक्यस्य–पदसमूहस्य, तत्सम्बन्धिना इत्यर्थ , आदिमध्यान्तवर्त्यैकपदार्थेन–आदिवर्तिना मध्यवर्तिना अन्तवर्तिना वाक्यादिस्थितेन एकेन अद्वितीयेन पदार्थेन वस्तुना, अर्थसंगति अर्थस्य अभिधेयस्य सङ्गति समन्वयम्, जायेत–भवेत्, तत् दीपक–दीपकाख्योऽलङ्कार , उक्त–प्रतिपादितम् । यथा–तदभिमपद्येनोदाहरतीत्यर्थ ।

भावार्थ—जिस अलङ्कार में, वाक्य के आदि मध्य अथवा अन्तवर्ती एक वस्तु के साथ, अर्थ का सम्बन्ध हो, उसे दीपक अलङ्कार कहा गया है । जैसे–॥९९॥

दीपकमुदाहरति—

जगुस्तव दिवि स्वामिन् ! गन्धर्वाः पावनं यशः।
किन्नराश्च कुलाद्रीणां कन्दरेषु मुहुर्मुदा ॥१००॥

अन्वयः—स्वामिन् ! दिवि गन्धर्वाः, कुलाद्रीणां कन्दरेषु च किन्नराः मुहुः मुदा तव पावनं यशः जगुः।

पदार्थ—स्वामिन् !—हे प्रभो ! दिवि—स्वर्गलोके, गन्धर्वाः—देवयोनिविशेषाः, कुलाद्रीणां—कुलपर्वतानाम्, हिमालयप्रभृतीनाम्, कन्दरेषु—गुहासु च, किन्नराः—किम्पुरुषाः, मुहुः—वारं वारम्, निरन्तरमित्यर्थः। मुदा—हर्षेण, तव—भवतः, पावनं—शुभ्रम्, पवित्रं वा, यशः—कीर्तिम्, जगुः—कीर्तयामासुः। अत्र पद्यादौ स्थितं जगुरित्येकं क्रियापदं 'गन्धर्वास्तव यशो जगुः' 'किन्नराश्च तव यशो जगुः' इत्युभयोरपि वाक्ययोरन्वेति, तस्मादिदं दीपकम्।

भावार्थ—हे प्रभो ! स्वर्गलोक में गन्धर्वों ने और कुलपर्वतों की कन्दराओं में किन्नरों ने, बार २ हर्ष से तुम्हारे शुभ्र यश का कीर्तन किया ॥१००॥

दीपकं पुनरुदाहरति—

विराजन्ते तमिस्राणि द्योतन्ते दिवि तारकाः।
विभान्ति कुमुदश्रेण्यः शोभन्ते निशि दीपकाः ॥१०१॥

अन्वयः—तमिस्राणि विराजन्ते, दिवि तारकाः द्योतन्ते, कुमुदश्रेण्यः विभान्ति, निशि दीपकाः शोभन्ते।

पदार्थ—तमिस्राणि—निबिडानि तमांसि, विराजन्ते—विजृम्भन्ते, दिवि—द्युलोके, आकाशे, तारकाः—नक्षत्राणि, द्योतन्ते—प्रकाशन्ते, कुमुदश्रेण्यः—कैरवपंक्तयः, विभान्ति—विशेषेण शोभन्ते, निशि—रात्रौ, दीपकाः—आलोकवर्त्तिकाः, शोभन्ते—प्रज्वलन्तीत्यर्थः। अत्र अर्थतोऽभिन्नानां बहूनां क्रियापदानाम् आदिमध्यान्तस्थितानाम् एकेन 'निशि' इत्येतेन कारकपदेन अन्वितत्वाद् दीपकालङ्कारः।

भावार्थ—अन्धेरा फैल रहा है, आकाश में तारे चमक रहे हैं, रात में खिलने वाले कमलों की कतार सुशोभित हो रही है और रात में दीपक जल रहे हैं ॥१०१॥

अवसरप्राप्तमतिशयालंकारं लक्षयति—

वस्तूनां वक्तुमुत्कर्षमसम्भाव्यं यदुच्यते ।
वदन्त्यतिशयाख्यं तमलङ्कारं बुधा यथा ॥१०२॥

अन्वयः—वस्तूनाम् उत्कर्षं वक्तुं यत् असम्भाव्यम् उच्यते, बुधाः तम् अतिशयाख्यम् अलङ्कारं वदन्ति। यथा—

पदार्थ—वस्तूनां-पदार्थानाम्, उत्कर्षं-महत्त्वम्, वक्तुं-प्रतिपादयितुम्, यत् असम्भाव्य-सम्भवायोग्यम्, उच्यते-प्रतिपाद्यते, बुधा-आलङ्कारिका, तं-तादृशम्, अतिशयाख्यम्-अतिशयसंज्ञकम् अलङ्कारम्, वदन्ति-कथयन्ति, यथा—अग्रिमपद्येन तमुदाहरतीत्यर्थः ।

भावार्थ—वस्तु का उत्कर्ष बताने के लिये जो असम्भव बात कही जाय, विद्वज्जन उसे अतिशय नामक अलङ्कार कहते हैं। जैसे—॥१०२॥

अतिशयालंकारमुदाहरति—

त्वद्दारितारितरुणीश्वसितानिलेन
सम्मूर्च्छितोर्मिषु महोदधिषु क्षितीश ! ।
अन्तर्लुठद्गिरिपरस्परशृङ्गसङ्ग-
घोरारवैर्मुररिपोरपयाति निद्रा ॥१०३॥

अन्वय—क्षितीश ! त्वद्दारितारितरुणीश्वसितानिलेन सम्मूर्च्छितोर्मिषु महोदधिषु अन्तर्लुठद्गिरिपरस्परशृङ्गसङ्ग-घोरारवैः मुररिपोः निद्रा अपयाति ।

पदार्थ—क्षितीश !-हे पृथ्वीपते ! त्वद्दारितारितरुणीश्वसितानिलेन-त्वया भवता दारिता उन्मूलिता युद्धस्थले निहता ये अरयः शत्रवः, तेषां तरुणीनां कामिनीनां श्वसितानिलेन उष्णश्वासवायुना, सम्मूर्च्छितोर्मिषु-सम्मूर्च्छिता अतितरां वर्धिता ऊर्मयस्तरङ्गा येषां तेषु, महोदधिषु-विशालसमुद्रेषु, अन्तर्लुठद्गिरिपरस्परशृङ्गसङ्गघोरारवैः-अन्तर्लुठन्तः जलमध्ये कल्लोलवेगेन प्रचरन्तः ये गिरयः पर्वताः तेषां परस्परस्य मिथः शृङ्गाणां शिखराणां यः सङ्गः सम्पर्कः तेन ये घोरा भयकरा आरावा ध्वनयस्तैः, मुररिपोः-विष्णोः समुद्रशायिनः, निद्रा-स्वापः, शयनम्, अपयाति-अपगच्छति नश्यतीत्यर्थः । अत्र

अरिवधूनां श्वासानिलेन समुद्रक्षोभः, पर्वतानां शिखरसंघट्ट, तज्जनितशब्देन च विष्णोर्निद्राभङ्गः, एतेऽसम्भाविनोऽर्थाः प्रतापातिशयं राज्ञः प्रतिपादयन्तीत्यतिशयालंकारः।

भावार्थ—हे राजन्! तुम्हारे द्वारा नष्ट हुए शत्रुओं की स्त्रियों के उच्छ्वास वायु से बढ़ी हुई लहरों वाले समुद्रों में, जल के बीच इधर उधर हिलने के कारण परस्पर टकराये हुए शिखरों से उत्पन्न हुई घोर ध्वनियों के द्वारा विष्णु की निद्रा टूट जाती है ॥१०३॥

अतिशयालंकारं पुनरुदाहरति—

**एकदण्डानि सप्त स्युर्यदि च्छत्राणि पर्वते।**
**तदोपमीयते पार्श्वमूर्ध्नि सप्तफणः फणी ॥१०४॥**

अन्वयः—यदि पर्वते एकदण्डानि सप्त च्छत्राणि स्युः, तदा पार्श्वमूर्ध्नि सप्तफणः फणी उपमीयते।

पदार्थः—यदि-चेत्, पर्वते-गिरौ, एकदण्डानि-एकः अद्वितीयः एकत्वसंख्याविशिष्टो वा दण्डः यष्टिर्येषां तथाभूतानि, सप्त-सप्तसंख्यायुक्तानि, छत्राणि-आतपत्राणि, स्युः-भवेयुः, तदा-तर्हि, पार्श्वमूर्ध्नि-पार्श्वनाथस्य भगवतः शिरसि, स्थित इति शेषः, सप्तफणः-सप्त फणाः भोगाः यस्य तादृशः, फणी-भुजगः, उपमीयते-सदृशीक्रियते। अत्र पार्श्वनाथशिरःस्थितस्य भुजगस्य प्रकर्षातिशयप्रख्यापनार्थं पर्वतशिखरस्थितसप्तातपत्ररूपासम्भवधर्मप्रतिपादनादतिशयालंकारः।

भावार्थ—यदि पहाड़ पर एक डंडे में सात छतरियाँ लगी हो सकें तो पार्श्वनाथ के सिर पर बैठे हुए, सात फनवाले सांप की उपमा दी जा सकती है ॥१०४॥

क्रमप्राप्तं हेत्वलंकारं लक्षयति—

**यत्रोत्पादयतः किञ्चिदर्थं कर्तुः प्रकाशते।**
**तद्योग्यतायुक्तिरसौ हेतुरुक्तो बुधैर्यथा ॥१०५॥**

अन्वयः—यत्र किञ्चिदर्थमुत्पादयतः कर्तुः तद्योग्यतायुक्तिः प्रकाशते, असौ बुधैः हेतुः उक्तः। यथा—

पदार्थः—यत्र-अस्मिन्नलंकारे, किञ्चित्-कमपि, अर्थम्-अभिधेयम्, उत्पादयतः-प्रतिपादयतः, कर्तुः-रचयितुः, तद्योग्यतायुक्तिः-तस्यार्थस्य योग्यतायाः

प्रतिपादनशक्तौ, युक्ति कारणम्, प्रकाशते-प्रतीयते अवबुध्यते वा, असौ-एवभूतोऽलंकार, बुधै-विद्वद्भि, हेतु-एतत्संज्ञक, उक्त-प्रतिपादित। यथा—अग्रिमपद्येन हेतुमुदाहरतीत्यर्थ।

भावार्थ—जिस अलङ्कार में, किसी अर्थ का प्रतिपादन करने वाले कर्त्ता की, उस अर्थप्रतिपादन शक्ति में कारण की प्रतीति हो, उसे विद्वानों ने हेतु अलकार कहा है। जैसे—॥१०५॥

प्राकृतकाव्ये हेतुमुदाहरति—

जुव्वणसमग्रोम्मत्ता तत्ता विरहेण कुणइ णाहस्स।
कंठब्भन्तरघोलिदमहुरसरं बालिआ गीअम् ॥१०६॥

अस्य संस्कृतम्—

यौवनसमयोन्मत्ता तप्ता विरहेण करोति नाथस्य।
कण्ठाभ्यन्तरघोलितमधुरस्वरं बालिका गीतम् ॥

अन्वयः—यौवनसमयोन्मत्ता नाथस्य विरहेण तप्ता बालिका कण्ठाभ्यन्तरघोलितमधुरस्वरं गीतं करोति।

पदार्थ—यौवनसमयोन्मत्ता-तारुण्योद्गमेन उन्मादावस्थां प्रापिता, नाथस्य-भर्तु, विरहेण-वियोगेन, तप्ता-अतितरा [illegible]खिता, बालिका-नवकामिनी, नववधू, षोडशी इति यावत्, कण्ठाभ्यन्तरघोलितमधुरस्वरं-गलमध्य एव घोलित अव्यक्तमिवोच्चारित मधुरो मनोहर स्वरो ध्वनिर्यत्र तत् यथा स्यात्तथा, गीत-गानम्, करोति-विदधाति। अत्र बालिकाया सगीतेन मनोगतमर्थं प्रतिपादयन्त्या, सद्यौवनोद्भेदजन्योन्माद, कान्त वियोगजन्यव्यथा च गीतोत्पत्तौ कारणमिति हेतुरलङ्कार।

भावार्थ—नई जवानी के फूटने से पागल हुई, तथा पति वियोग से व्यथित बालिका, गल के बीच में ही अव्यक्त सा उच्चारण करती हुई मधुर स्वर से गीत गा रही है ॥१०६॥

प्राकृतकाव्य एव पुनर्हेतुमुदाहरति—

विससोग्रो मिश्रंको कयन्तग्रासाइ थाग्रदो पवणो।
जाग्रपलासो सिहरी पहिए मारंति ते तिम्हि ॥१०७॥

अस्य संस्कृतम्—

विषसोदरो मृगाङ्कः कृतान्ताशाया आगतः पवनः ।
जातपलाशः शिखरी पथिकान् मारयन्ति ते त्रयः ॥

**अन्वयः—विषसोदरः मृगाङ्कः, कृतान्ताशाया आगतः पवनः, जातपलाशः शिखरी, ते त्रयः पथिकान् मारयन्ति ।**

पदार्थः—विषसोदरः—विषस्य कालकूटस्य सोदरो भ्राता एकस्थानसमुत्पन्न इत्यर्थः, मृगाङ्कः—शशलाञ्छनः, कृतान्ताशायाः—कृतान्तस्य यमस्य आशा यमनिवासोपलक्षिता दक्षिणा दिगित्यर्थः, तस्याः, आगतः—प्रवाहितः, पवनः—वायुः, मलयानिल इत्यर्थः । जातपलाशः—जातानि समुत्पन्नानि पलाशानि पत्राणि यस्मिन् तथाभूतः, समुद्भूतकिसलय इत्यर्थः, शिखरी—वृक्षः, ते—एते उक्ताः, त्रयः—त्रिविधाः पदार्थाः, पथिकान्—मार्गगामिनः पुरुषान्, मारयन्ति—पीडयन्तीत्यर्थः । अत्र पथिकमारकत्वे मृगाङ्कस्य विषसोदरत्वम्, पवनस्य यमदिशात आगतत्वम्, शिखरिणः जातपलाशत्वम्—जाता समुत्पन्ना पले मांसभक्षणे आशा अभिलाषा यस्य, तस्य भावस्तत्त्वम्, कारणमुक्तम्, तस्मादिह हेतुरलङ्कारः ।

भावार्थ—विष का सगा भाई चन्द्रमा, दक्षिण दिशा की ओर से आई हुई हवा, और नए कोंपलों से भरा हुआ वृक्ष—ये तीनों, पथिकों को पीड़ा पहुंचाते हैं ॥१०७॥

क्रमप्राप्तां पर्यायोक्तिं लक्षयति—

अतत्परतया यत्र कल्प्यमानेन वस्तुना ।
विवक्षितं प्रतीयेत पर्यायोक्तिरियं यथा ॥१०८॥

**अन्वयः—यत्र अतत्परतया कल्प्यमानेन वस्तुना विवक्षितं प्रतीयेत, इयं पर्यायोक्तिः । यथा—**

पदार्थः—यत्र—यस्मिन्नलंकारे, अतत्परतया—विवक्षितार्थबोधकत्तया, कल्प्यमानेन—निरूप्यमानेन, 'जल्प्यमानेन' इति पाठे कथ्यमानेनेत्यर्थः, वस्तुना—अर्थेन, विवक्षितं—वक्तुमिष्टं वस्तु, प्रतीयेत—ज्ञायेत, इयम्—एषा, पर्यायोक्तिः—एतन्नामकोऽलंकार इत्यर्थः । यथा—अनेनपद्ये पर्यायोक्तिमुदाहरतीत्यर्थः ।

भावार्थ—जिस अलंकार में, विवक्षित से अर्थ का बोध न होने पर, कल्प्यमान अथवा वर्ण्यमान वस्तु से विवक्षित की प्रतीति हो जाय, उसे पर्यायोक्ति अलंकार कहा गया है। जैसे—॥१०८॥

पर्यायोक्तिमुदाहरति—

त्वत्सैन्यवाहनिवहस्य महाऽऽहवेषु
द्वेषः प्रभो ! रिपुपुरन्ध्रिजनस्य चासीत्।
एकः खुरैर्बहुलरेणुततिं चकार
तां सञ्जहार पुनरश्रुजलैर्यदन्यः ॥१०६॥

अन्वयः—प्रभो ! महाहवेषु त्वत्सैन्यवाहनिवहस्य रिपुपुरन्ध्रिजनस्य च द्वेषः आसीत्। यद् एकः खुरैः बहुलरेणुततिं चकार, अन्यः पुनस्ताम् अश्रुजलैः सञ्जहार।

पदार्थ—प्रभो !-हे स्वामिन् ! महाहवेषु-तुमुलसंग्रामेषु, प्रवर्तमानेषु, सत्सु इति शेष, त्वत्सैन्यवाहनिवहस्य-त्वदीयसैन्येषु बलेषु ये वाहाः अश्वाः तेषां निवहस्य समूहस्य, रिपुपुरन्ध्रिजनस्य च-रिपूणां स्त्रियो पुरन्ध्रिजनस्य नारीसमूहस्य च, द्वेष-मिथो वैरभाव, आसीत्-अभूत्, यत्-यस्मात् कारणात्, एक-प्रथमः अश्वसमूह इत्यर्थ, खुरैः-शफैः, तदाघातैरित्यर्थ, बहुलरेणुततिं-प्रचुरधूलिविस्तारम्, चकार-विदधे। अन्य-अपरः शत्रुनारीजन इत्यर्थ, पुन तां-धूलिसन्ततिम्, अश्रुजलै-भर्तृवियोगजन्यैः नेत्रवारिसमूहै, सञ्जहार-अपनिनाय। अत्र अतत्परतया प्रयुक्तेन 'राजसैन्याश्वखुरोद्धूतं रज निहतरिपुनारीजनशोकाश्रुणा अपनीतम्' इत्यर्थकेन वाक्येन राज्ञः प्रचुरशत्रुघातित्वं प्रतीयते, तस्मात् पर्यायोक्तिरलङ्कारः।

भावार्थ—हे राजन् ! घोर युद्ध प्रारम्भ होने पर, तुम्हारी सेना के घोड़े, और शत्रुओं की स्त्रियों में ही परस्पर वैरभाव था। घोड़ों ने अपनी टापों से धूल को खूब उड़ाया, और शत्रुस्त्रियों ने अपने आँसुओं की वर्षा से फिर बैठा दिया ॥१०६॥

क्रमप्राप्तं समाहितमलङ्कारं लक्षयति—

कारणान्तरसम्पर्काद्दैवादारम्भ एव हि।
यत्र कार्यस्य जायेत तज्ज्ञायेत समाहितम् ॥११०॥

अन्वयः—यत्र कार्यस्य आरम्भ एव दैवात् कारणान्तर-सम्पत्तिर्जायेत, तत् हि समाहितं ज्ञायेत।

पदार्थ —यत्र-यस्मिन्नलङ्कारे, कार्यस्य-कर्मणः, आरम्भे-उपक्रमे एव, दैवात्-सहसा, कारणान्तरसम्पत्ति-हेत्वन्तरस्य समुपस्थिति, जायेत-भवेत्, तत् हि-तदेव, समाहितम्-एतदाख्योऽलङ्कार, ज्ञायेत-अवगम्येत।

भावार्थ—जिस अलंकार में, कार्य के आरम्भ में ही अचानक किसी अन्य कारण की उपस्थिति हो जावे, उसको समाहित नामक अलंकार समझना चाहिये ॥११०॥

समाहितमुदाहरति—

मनस्विनी वल्लभवेश्म गन्तुमुत्कण्ठिता यावदभून्निशायाम्।
तावन्नवाम्भोधरधीरनादप्रबोधितः सौधशिखी चुकूज ॥१११॥

अन्वय—मनस्विनी निशायां यावत् वल्लभवेश्म गन्तुम् उत्कण्ठिता अभूत्, तावत् नवाम्भोधरधीरनादप्रबोधितः सौधशिखी चुकूज।

पदार्थ —मनस्विनी-अतितरां मानिनी कान्ता काचित्, निशाया-रात्रौ, यावत्-यत्कालपर्यन्तम्, यस्मिन् काले वा, वल्लभवेश्म-प्रियतमस्य गृहम्, गन्तुम्-यातुम्, उत्कण्ठिता-उत्सुका, अभूत्-आसीत्, तावत्-तस्मिन्नेव काले, नवाम्भोधरधीरनादप्रबोधित -नवीनपयोदस्य धीरेण गम्भीरेण नादेन ध्वनिना प्रबोधित जागरित, सौधशिखी-हर्म्ये वर्तमानो मयूर, चुकूज-रुराव केकारवं चकारेत्यर्थ। अत्र मानिन्या प्रियगृहगमने उत्कण्ठा हेतुरेक, तत्र च प्रियगृहगमनरूपस्य कार्यस्य आरम्भ एव घनगर्जितेन मयूरनाद कामोद्दीपकत्वेन तस्यैव कारणान्तर समुपस्थितम्, तस्मात्समाहितालङ्कार।

भावार्थ—मानिनी कान्ता, रात में जिस समय अपने पति के कमरे में जाने के लिये उत्कण्ठित हुई, उसी समय नये बादलों के गम्भीर गर्जन से जगा हुआ, महलों का मोर भी बोलने लगा ॥१११॥

क्रमप्राप्तां परिवृत्तिं लक्षयति—

परिवर्त्तनमर्थेन सदृशाऽसदृशेन वा।
जायेतार्थस्य यत्रासौ परिवृत्तिर्मता यथा ॥११२॥

**अन्वय —यत्र सदृशा वा असदृशेन अर्थेन अर्थस्य परिवर्त्तन जायेत, असौ परिवृत्तिः मता। यथा—**

पदार्थ —यत्र-यस्मिन्नलङ्कारे, सदृशा-समेन, वा-अथवा, असदृशेन-विषमेण न्यूनेनाधिकेन वा, अर्थेन-वस्तुना, अर्थस्य-वस्तुन, परिवर्त्तन-विनिमय, जायेत-भवेत, असौ-एषा, परिवृत्ति -एतदाख्यालकृति, मता कथिता। यथा-इत्यग्रिमपद्यरूपमुदाहरण निर्दिशति।

भावार्थ—जिस अलकार में, समान अथवा न्यूनाधिक एक वस्तु के साथ अन्य वस्तु का परिवर्त्तन हो,उसे परिवृत्ति नामक अलकार कहा गया है। जैसे-॥११२॥

**तत्र सदृशवस्तुना विनिमयमूलां परिवृत्तिं तावदुदाहरति—**

**अन्तर्गतव्यालफणामणीनाम्**
**प्रभाभिरुद्भासितभूषु भर्त्तः।।**
**स्फुरत्प्रदीपानि गृहाणि मुक्त्वा**
**गुहासु शेते त्वदरातिवर्गः ॥११३॥**

**अन्वय —भर्त्तः! त्वदरातिवर्ग स्फुरत्प्रदीपानि गृहाणि मुक्त्वा, अन्तर्गतव्यालफणामणीनाम् प्रभाभि उद्भासितभूषु गुहासु शेते।**

पदार्थ —भर्त्त!—हे प्रभो! त्वदरातिवर्ग -भवत शत्रुसमूह, स्फुरत्प्रदीपानि-स्फुरन्तो दीप्यमाना प्रदीपा आलोकवर्तिका येषु तथाभूतानि, गृहाणि-सदनानि, मुक्त्वा-परित्यज्य, अन्तर्गतव्यालफणामणीनाम्-अन्तर्गता अभ्यन्तरवर्तिनो ये व्याला सर्पा, तेषां ये फणामणय भोग स्थितरत्नानि तेषाम्, प्रभाभि -किरणै, उद्भासितभूषु-उद्भासिता प्रकाशिता भू भूमि यासु एवभूतासु, गुहासु-पर्वतदरीषु, शेते-स्वपिति, आश्रय लभत इत्यर्थ। अत्र फणामणय प्रदीपसदृशा, गुहाश्च गृहसमा, एव च प्रदीपप्रकाशितानि गृहाणि विहाय फणामणिदीपितानां गह्वराणामुपादानात् सदृशवस्तुविनिमयमूल परिवृत्त्याख्योऽलङ्कार।

भावार्थ—हे मालिक! आपके शत्रु, प्रदीपों से प्रकाशित घरों को छोड़कर, अन्दर रहने वाले भयकर सर्पों की मणियों से प्रकाशित हुई २ पहाड़ों की गुफाओं में सोते हैं ॥११३॥

अथासदृशवस्तुना विनिमयमूलां परिवृत्तिमुदाहरति—

दत्त्वा प्रहारं रिपुपार्थिवानां
जग्राह यः संयति जीवितव्यम्।
शृङ्गारभङ्गीञ्च तदङ्गनाना-
मादाय दुःखानि ददौ सदैव ॥११४॥

अन्वयः—यः संयति रिपुपार्थिवानां प्रहारं दत्त्वा जीवितव्यं जग्राह, तदङ्गनानां च शृङ्गारभङ्गीम् आदाय सदैव दुःखानि ददौ।

पदार्थ—यः—भूपतिरित्यर्थः, संयति—संग्रामे, रिपुपार्थिवानां—शत्रुनृपाणाम्, प्रहारम्—आघातम्, दत्त्वा—वितीर्य, विधायेत्यर्थः, जीवितव्यं—जीवनम्; जग्राह—गृहीतवान्, तदङ्गनाना—शत्रुनारीणां च, शृङ्गारभङ्गीम्—रसविलासम्, आदाय—स्वयं गृहीत्वा, सदैव—सर्वदैव, भोग्यानीति शेषः, दुःखानि—क्लेशान्, ददौ—दत्तवान्। अत्र प्रहारजीवनयोः शृङ्गारभङ्गीदुःखयोश्च सादृश्यं नास्ति, एवं च तयोरसदृशवस्तुनोः विनिमयदर्शनात्, असदृशवस्तुविनिमयमूला परिवृत्तिरलंकारः।

भावार्थ—जिसने संग्राम में, शत्रु राजाओं को प्रहार देकर उनके जीवन को ले लिया, तथा शत्रुनारियों के शृङ्गार विलास को लेकर सदा के लिये उन्हें दुःख दे दिया ॥११४॥

क्रमप्राप्तं यथासंख्यं लक्षयति—

यत्रोक्तानां पदार्थानामर्थाः सम्बन्धिनः पुनः।
क्रमेण तेन बध्यन्ते तद् यथासंख्यमुच्यते ॥११५॥

अन्वयः—यत्र उक्तानां पदार्थानां सम्बन्धिनः अर्थाः पुनः तेन क्रमेण बध्यन्ते, तत् यथासंख्यम् उच्यते।

पदार्थ—यत्र—यस्मिन्नलंकारे, उक्तानां—कथितानाम्, पदार्थानां—वस्तूनाम्, सम्बन्धिनः—सम्बन्धशालिनः, अर्थाः—वस्तूनि, पुनः—भूयः, तेन—पूर्वोक्तेन, क्रमेण—आनुपूर्व्या, बध्यन्ते—ग्रथ्यन्ते, विरच्यन्त इत्यर्थः। तत्—तादृक्, यथासंख्यम्—एतदाख्योऽलंकारः, उच्यते—कथ्यते।

भावार्थ—जिस अलंकार में, पूर्व प्रतिपादित पदार्थों के सम्बन्धी अर्थों

को फिर उसी आनुपूर्वी से निरूपण किया जाय, उसको 'यथासंख्य' अलंकार कहते हैं ॥११५॥

यथासंख्यमुदाहरति—

मृदुभुजलतिकाभ्यां शोणिमानं दधत्या
चरणकमलभासा चारुणा चाननेन ।
बिसकिसलयपद्मान्यात्तलक्ष्मीणि मन्ये
विरहविपदि वैरात् तन्वते तापमङ्गे ॥११६॥

अन्वयः—बिसकिसलयपद्मानि मृदुभुजलतिकाभ्यां शोणिमानं दधत्या चरणकमलभासा चारुणा आननेन च आत्तलक्ष्मीणि विरहविपदि वैरात् अङ्गे तापं तन्वते इति मन्ये ।

पदार्थ—बिसकिसलयपद्मानि-बिसानि मृणालानि, किसलया नवपल्लवाः, पद्मानि कमलानि, एतानि यथाक्रमम्, मृदुभुजलतिकाभ्या-कोमलबाहुलतिभ्याम् [ बिसानि ], शोणिमान-रक्तिमानम्, दधत्या-धारयन्त्या, चरणकमलभासा-पादपद्मकान्त्या [नवपल्लवा], चारुणा सुन्दरेण, आननेन मुखेन च [ पद्मानि ], आत्तलक्ष्मीणि-आत्ता गृहीता लक्ष्मी श्रीः शोभा येषां तथाभूतानि सन्ति, विरहविपदि-विरह प्रियवियोग एव विपत् विपत्ति तस्या सत्याम्, वैरात्-निजशोभाहरणासमुत्पन्नाद् द्वेषात्, अङ्गे-विरहिण्या नायिकाया शरीरे, तापं-सन्तापं क्लेशमेव, तन्वते-जनयन्ति । इति मन्ये-सम्भावयामि । अत्र भुजलता-चरणकमल-आननरूपपदार्थानां सम्बन्धिन बिसकिसलय-पद्मरूपाः पदार्थाः यथाक्रमं निबद्धा सन्तीति यथासंख्यमलंकारः ।

भावार्थ—बिस [ में ], नये कोंपल और कमल—इन में से यथाक्रम कोमल भुजलताओं ने बिसों की, लाली को धारण करती हुई चरण कमल की कान्ति ने नये कोंपलों की, और सुन्दरमुख ने कमलों की शोभा को हरण कर लिया है । मालूम होता है, इसी लिये ये बिस आदि विरह विपत्ति में विरहिणी नायिका के शरीर में सन्ताप को उत्पन्न कर रहे हैं ॥११६॥

अवसरप्राप्तं विषमालंकारं लक्षयति—

वस्तुनोर्यत्र सम्बन्धमनौचित्येन केनचित् ।
असम्भाव्यं वदेद् वक्ता तमाहुर्विषमं यथा ॥११७॥

अन्वयः—यत्र वक्ता वस्तुनोः सम्बन्धं केनचिद् अनौचित्येन असम्भाव्यं वदेत्, तं विषमम् आहुः। यथा—

पदार्थः—यत्र-यस्मिन्नलंकारे, वक्ता-काव्यनिर्माणतत्परः कविः, वस्तुनोः-द्वयोः पदार्थयोः, सम्बन्धं-संसर्गम्, केनचित्-केनापि, अनिर्दिष्टेन, अनौचित्येन-अन्याय्यभावेन, असम्भाव्यं-सम्भवायोग्यं प्रतीतिविपरीतम्, वदेत्-कथयेत्, तम्-अलंकारम्, विषमम्-एतदाख्यम्, आहुः-कथयन्ति। यथा इत्यग्रिमोदाहरणपद्यं निर्दिशति।

भावार्थ—जिस अलंकार में, वक्ता कवि, दो वस्तुओं के सम्बन्ध को, किसी अनौचित्य के कारण अयोग्य ठहरावे, उसे विषम अलंकार कहते हैं। जैसे-॥१२७॥

विषमालङ्कारमुदाहरति—

केदं तव वपुर्वत्से! कदलीगर्भकोमलम्।
क्वायं राजीमति! क्लेशदायी व्रतपरिग्रहः॥११८॥

अन्वयः—वत्से! राजीमति! कदलीगर्भकोमलम् इदं तव वपुः क्व? अयं क्लेशदायी व्रतपरिग्रहः क्व?।

पदार्थ—वत्से!—हे बाले! राजीमति!-राजीमतीनाम्नीं कामपि युवतीं तपश्चर्यायै समुत्सुकामवलोक्य कस्यचिद् यतेस्तात्प्रतीयमुक्तिः, हे राजीमति! कदलीगर्भकोमलं-रम्भान्तर्भागमृदुलम्, इदं-पुरो दृश्यमानम्, तव-ते, वपु-शरीरम्, क्व-कुत्र, अयं-श्रुतिस्मृत्यादिप्रतिपादितः, क्लेशदायी-उपवासादिदुःखबहुलः, व्रतपरिग्रहः-कृच्छ्रचान्द्रायणादेर्नियमविशेषस्य स्वीकारः, क्व-कुत्र? अत्र कदलीगर्भकोमलाङ्ग्यास्तरुण्याः कृच्छ्रव्रताचरणमयुक्तमिति, तादृशकोमलवपुःकठिनव्रतपरिग्रहयोः सम्बन्धस्य अनौचित्येन असम्भव इति विषमालङ्कारः।

भावार्थ—हे बाला राजीमति! केले की गाभ की तरह अत्यन्त कोमल तुम्हारा यह शरीर कहां? और क्लेश देने वाला यह कठिन व्रतों का पालन कहां? ॥११८॥

क्रमप्राप्तं सहोक्त्यलंकारं लक्षयति—

सहोक्तिः सा भवेद् यत्र कार्यकारणयोः सह।
समुत्पत्तिकथा हेतोर्वक्तुं तज्जन्मशक्तताम्॥११९॥

**अन्वयः—यत्र हेतोः तज्जन्मशक्ततां वक्तुं कार्यकारणयोः सह समुत्पत्तिकथा भवेत्, सा सहोक्तिः।**

पदार्थ —यत्र–काव्ये, हेतोः–कारणस्य, तज्जन्मशक्तता–तस्मात् हेतोः जन्म उत्पत्तिर्यस्य तत् तज्जन्म, कार्यमित्यर्थः, तत्र शक्तता कार्योत्पादनसामर्थ्यमित्यर्थः, वक्तुं–कथयितुम्, कार्यकारणयोः–साध्यसाधनयोः, सह–युगपदेव, समुत्पत्तिकथा–समुत्पत्तेः जन्मनः कथा कथनं प्रतिपादनम्, भवेत्–स्यात्, सा–एवंभूता, सहोक्तिः–एतदाख्योऽलङ्कारः, उच्यत इति शेषः।

भावार्थ—जिस काव्य में, हेतु का, हेतुजन्य कार्य की उत्पत्ति के प्रति सामर्थ्य बतलाने के लिए, इकट्ठा ही कार्य और कारण की उत्पत्ति का कथन किया जावे, उसे सहोक्ति कहते हैं ॥११९॥

सहोक्त्यलङ्कारमुदाहरति—

आदत्ते सह यशसा नमयति सार्द्धं मदेन संग्रामे।
सह विद्विषां श्रियासौ कोदण्डं कर्षति श्रीमान् ॥१२०॥

**अन्वयः—श्रीमान् असौ संग्रामे विद्विषां यशसा सह कोदण्डम् आदत्ते, मदेन सार्द्धम् नमयति, श्रिया सह कर्षति।**

पदार्थ —श्रीमान्–ऐश्वर्यसम्पन्नः सुन्दरो वा, असौ–एषः नृपतिः, संग्रामे–रणाङ्गणे, विद्विषां–प्रतिपक्षभूतानां रिपूणाम्, यशसा–कीर्त्या, सह–सार्द्धम्, कोदण्डं–धनुः, आदत्ते–गृह्णाति, मदेन–गर्वेण शत्रूणामिति शेषः, सार्द्धं–सममेव, नमयति–प्रत्यञ्चामारोपयितुं नतं करोतीत्यर्थः। श्रिया–राजलक्ष्म्या, शत्रूणामित्यत्रापि योज्यम्, सह–समम्, कर्षति–आकर्षति, अत्र कोदण्डमिति शेषो योज्यः। यद्यपि लोकशास्त्रयोः कार्यकारणयोर्नियमेन पूर्वापरभावः प्रसिद्धः, तथाप्यत्र कोदण्डाकर्षणारूपस्य कारणस्य कार्यजननसामर्थ्यातिशयं प्रकटीकर्तुं यशोग्रहण–मदापनयन–लक्ष्मीहरणात्मकैः कार्यैः सहैव तस्योत्पत्तिकथनात् सहोक्तिरलङ्कारः।

क्रमप्राप्तं विरोधालङ्कारं लक्षयति—

आपाते हि विरुद्धत्वं यत्र वाक्ये न तत्त्वतः।
शब्दार्थकृतमाभाति स विरोधः स्मृतो यथा ॥१२१॥

अन्वय.—यत्र वाक्ये आपाते हि शब्दार्थकृतं विरुद्धत्वम् आभाति, तत्त्वतः न, स विरोधः स्मृतः। यथा—

पदार्थ —यत्र-यस्मिन्, वाक्ये-पदसमुदायविशेषे, आपाते-पाठश्रवणमात्रे, हि-एव, न तत. परमिति भाव, शब्दार्थकृत-शब्देन अर्थेन च कृत जनितम्, विरुद्धत्व-विरोध, आभाति-प्रतीयते, तत्त्वत -याथातथ्येन, शब्दार्थविचारणाया सत्याम्, न-नैव आभाति, स -एवम्भूतोऽलङ्कार, विरोध -विरोधसंज्ञक, स्मृत -कथित। यथा-इत्यग्रिमपद्यरूपमुदाहरण निर्दिशति।

भावार्थ—जिस वाक्य में, पाठ का श्रवण होने पर ही शब्दजनित अथवा अर्थजनित विरोध मालूम पड़े, वस्तुस्थिति में विरोध न हो, उसे विरोध अलङ्कार कहते हैं। जैसे—॥१२१॥

द्विविधविरोधयोरादौ शब्दजनितविरोधमुदाहरति—

दुर्वारबाणविभवेन सुवर्मणापि
लोकोत्तरान्वयभुवाऽपि च धीवरेण।
प्रत्यर्थिषु प्रतिरणं स्खलितेषु तेन
संज्ञामवाप्य युयुधे पुनरेव विष्णुः ॥१२२॥

अन्वय.—विष्णु प्रत्यर्थिषु प्रतिरणं स्खलितेषु संज्ञामवाप्य सुवर्मणापि दुर्वारबाणविभवेन लोकोत्तरान्वयभुवापि च धीवरेण तेन पुनरेव युयुधे।

पदार्थ —विष्णु -श्रीकृष्ण, प्रत्यर्थिषु-शत्रुषु, प्रतिरण-प्रतिसमामम्, स्खलितेषु-पराजितेषु सत्सु, संज्ञा-चैतन्यम्, अवाप्य-लब्ध्वा, निजसैन्यनाशमवलोक्य अतिकुपितस्य जरासन्धस्य बाणप्रहारजनितमूर्च्छात इति भाव, सुवर्मणापि-दृढकवचयुक्तेनापि, दुर्वारबाणविभवेन-दुर्वार दु खेन वारयितु शक्य बाणविभव शरचालनचातुर्य यस्य तेन, लोकोत्तरान्वयभुवापि-लोकोत्तर लोकेषु श्रेष्ठो योऽन्वयो वश, तस्मिन् भवतीति तेन

तथोक्तेनापि च, धीवरेण-उत्तमबुद्धियुक्तेन, तेन-जरासन्धेन सह, पुनरेव-भूयोऽपि, युयुधे-युद्ध चकार। अत्र दुष्टे मन्द वारबाणस्य वर्म्मणि विभव प्रभावो यस्येत्यर्थे, य दुर्वारबाण स कथ सुवर्म्मा ? यश्च लोकोत्तरान्वयभू स कथ धीवरः ? 'कैवर्ते दासधीवरौ' इत्यमरोक्ते, एव पाठश्रवणमात्रेण विरोधप्रतीतावपि, वाक्यार्थविचारणाया सत्या नास्त्येव विरोध इत्युक्तेनार्थेन बोधनात् शब्दकृतो विरोधालङ्कार ।

भावार्थ—विष्णु ने, शत्रुओं को प्रत्येक सग्राम में पराजित कर देने पर भी, मूर्च्छित होने के बाद फिर होश में आकर, श्रेष्ठ कवच युक्त भी, तीखे बाण चलाने वाले, अतिशय श्रेष्ठवश में उत्पन्न हुए २ भी बुद्धि युक्त जरासन्ध के साथ फिर भी युद्ध किया ॥१२२॥

अर्थकृतं विरोधालङ्कारमुदाहरति—

येनाक्रान्तं सिंहासनमरिभूभृच्छिरांसि विनतानि ।
चिप्ता युधि शरपंक्तिः कीर्तिर्याता दिगन्तेपु ॥१२३॥

अन्वयः—येन सिंहासनम् आक्रान्तम्, अरिभूभृच्छिरांसि विनतानि, युधि शरपंक्तिः क्षिप्ता, कीर्तिः दिगन्तेषु याता ।

पदार्थ—येन-भूपतिना, सिंहासन-श्रेष्ठराजासनम्, आक्रान्तम्-अधिष्ठितम्, तथा च अरिभूभृच्छिरांसि-शत्रुभूपालानां मस्तकानि, विनतानि-विशेषेण नम्रीभूतानि अवनतिं प्रापितानीत्यर्थः, युधि-संग्रामे, शरपंक्ति-बाणश्रेणि, इषुवृष्टिरिति यावत्, क्षिप्ता-प्रेरिता प्रहृता इत्यर्थः। कीर्ति-यशः, दिगन्तेषु-चतुराशासु, याता-प्राप्ता, सिंहासनादिरोहणेन दिगन्तव्यापिनी कीर्तिर्जाता इत्यर्थ । यदाक्रम्यते तदेव विनमति इति सर्वत्र दृश्यते, अत्र तु सिंहासनमाक्रान्तं शत्रुशिरांसि च नम्रीभूतानि इत्यर्थकृतो विरोध आपाततो भाति, एवमग्रेऽपि, यत् क्षिप्यते तदेव यत्रकुत्रचिद्यत्र याति, अत्र तु शरपङ्क्तिः क्षिप्ता कीर्तिश्च दिक्षु प्राप्ता इत्यर्थकृतो विरोध आपातत प्रतीयते। पर्यालोच्यमाने त्वर्थे राज्ञ पराक्रमातिशयशालित्वं निजविपक्षाभिभावकत्व च सिद्ध भवति ।

भावार्थ—जिस राजा ने सिंहासन पर कदम रक्खा, और सब शत्रु-राजाओं के सिर झुक गये, युद्ध में अनेक बाण फेंके, और कीर्ति दिशाओं में व्याप्त हो गई ॥१२३॥

क्रमप्राप्तमवसरालङ्कारं लक्षयति—

यत्रार्थान्तरमुत्कृष्टं सम्भवत्युपलक्षणम् ।
प्रस्तुतार्थस्य स प्रोक्तो बुधैरवसरो यथा ॥१२४॥

अन्वयः—यत्र प्रस्तुतार्थस्य उत्कृष्टम् अर्थान्तरम् उपलक्षणं सम्भवति, सः बुधैः अवसरः प्रोक्तः । यथा—

पदार्थ—यत्र–यस्मिन् काव्ये, प्रस्तुतार्थस्य–प्रकृतस्यार्थस्य, उत्कृष्ट–लोके शास्त्रे वा प्रसिद्धम्, अर्थान्तरम्–अर्थविशेष कश्चित्, उपलक्षणं–दृष्टान्तविधया संक्षेपेण बोधकम्, सम्भवति–संजायते, स–एवम्भूतोऽलङ्कार, बुधै–विद्वद्भि अवसर–अवसरसंज्ञक, प्रोक्त–कथित । यथा–इत्युदाहरणभूतमग्रिमपद्यं निर्दिशति ।

भावार्थ—जिस काव्य में, प्रस्तुत अर्थ का, कोई प्रसिद्ध अन्य अर्थ दृष्टान्त रूप से बोधक हो सके, वहा विद्वानों ने अवसर नामक अलङ्कार कहा है। जैसे—॥१२४॥

अवसरालङ्कारमुदाहरति—

स एष निश्चितानन्दः स्वच्छन्दतमविक्रमः ।
येन नक्तञ्चरः सोऽपि युद्धे वर्व्वरको जितः ॥१२५॥

अन्वयः—येन सः वर्व्वरकः नक्तञ्चरः अपि युद्धे जितः, निश्चितानन्दः स्वच्छन्दतमविक्रमः स एषः ।

पदार्थ—येन–नृपेण, स–दुर्जयत्वेन प्रसिद्ध, वर्व्वरक–एतदाख्य कश्चित्, नक्तञ्चर–राम्यट राक्षस, अपि युद्धे–संग्रामे, जित–वशीकृत, निहतो वेत्यर्थः, निश्चितानन्द–निश्चित सन्देहरहितो विजयलाभेन आनन्द प्रमोदो यस्य तथाभूत, 'निश्चयानन्द' इति पाठे निश्चयेन जयलाभस्यावश्यम्भावेन आनन्द आह्लादो यस्येत्यर्थो बोध्य, स्वच्छन्दतमविक्रम–स्वच्छन्दतमोऽतिशयेन स्वाधीनो विक्रम पराक्रमो यस्य तथोक्त, स एष–दृश्यमानोऽयं नृपो जयतीति शेष । अत्र अद्भुतपराक्रमशालिनो नृपस्य प्रसिद्धो जयलाभरूपोऽर्थं प्रस्तुत, तद्बोधकत्वेन शक्तिशालिवर्व्वरकराक्षसनिधनरूपमुत्कृष्टमर्थान्तर दृष्टान्ततया समुपस्थापितमिति अवसरालङ्कार ।

भावार्थ—जिस राजा ने, उस दुर्जय वर्वरक नामक राक्षस को भी युद्ध में मार डाला, अतिशय आनन्द का अनुभव करने वाला और अद्भुत पराक्रमशाली वह राजा, यह है ॥१२५॥

क्रमप्राप्तं सारालङ्कारं लक्षयति—

**यत्र निर्धारितात् सारात् सारं सारं ततस्ततः ।**
**निर्धार्यते यथाशक्ति तत् सारमिति कथ्यते ॥१२६॥**

**अन्वयः—यत्र ततस्ततः निर्द्धारितात् सारात् सारं सारम् अथवा यत्र ततो निर्द्धारितात् सारात् सारम्, ततः सारं यथाशक्ति निर्धार्यते तत् सारम् इति कथ्यते ।**

पदार्थ.—यत्र—यस्मिन् स्थले, ततस्तत —तस्मात् तस्मात्, निर्धारितात्—विविच्य निश्चितात्, सारात्—उत्कृष्टात्पदार्थात्, सारं सारम्—अतितरां सारभूतमंशम्, अथवा यत्र ततो निर्धारितात्—तस्मात् निश्चितात्, सारात्—उत्कृष्टाद् वस्तुनः, सारम्—उत्कृष्टतरं वस्तु, ततः—तस्मादुत्कृष्टतरात्, सारम्—अतिशयेनोत्कृष्टम्, यथाशक्ति—सामर्थ्यानुसारम्, निर्धार्यते—निरूप्यते, तत् सारं—साराख्योऽलङ्कार, इति कथ्यते—उच्यते ।

भावार्थ—जिस जगह, उस निश्चित उत्कृष्ट वस्तु से और अधिक उत्कृष्ट वस्तु का सामर्थ्यानुसार निर्धारण किया जाय, उसे सार नामक अलंकार कहते हैं ॥१२६॥

सारालङ्कारमुदाहरति—

**संसारे मानुष्यं सारं मानुष्यके तु कौलीन्यम् ।**
**कौलीन्ये धर्मित्वं धर्मित्वे चापि सदयत्वम् ॥१२७॥**

**अन्वयः—संसारे मानुष्यं मानुष्यके तु कौलीन्यं कौलीन्ये धर्मित्वं धर्मित्वेऽपि च सदयत्वं सारम् ।**

पदार्थ —संसारे—जगति जन्मनि वा, मानुष्यं—मानवत्वम्, मानुष्यके—मानवत्वे, तु—अपि, कौलीन्यं—कुलीनत्व श्रेष्ठकुलोत्पन्नत्वम्, कौलीन्ये—कुलीनत्वे, धर्मित्वं—धर्मस्वभावत्वम्, धर्मित्वेऽपि च—धर्माचरणपरायणत्वेऽपि च, सदयत्वं—दयालुत्वम्, सारम्—उत्कृष्टम् । अत्र निर्द्धारितात् मानुष्यादेः सारात् उत्तरोत्तर कौलीन्यादेः सारत्वं निर्द्धार्यते, तस्मात् साराख्योऽलङ्कार ।

भावार्थ—संसार में मनुष्य योनि में जन्म होना उत्कृष्ट है, मनुष्यता में भी कुलीनता और कुलीनता में भी धर्मात्मा होना, तथा धर्मपरायण होने पर भी दयालु होना उत्कृष्ट है ॥१२७॥

क्रमप्राप्तं श्लेषालङ्कारं लक्षयति—

पदैस्तैरेव भिन्नैर्वा वाक्यं वक्त्येकमेव हि ।
अनेकमर्थं यत्रासौ श्लेष इत्युच्यते यथा ॥१२८॥

अन्वयः—यत्र हि एकमेव वाक्यं तैरेव भिन्नैर्वा पदैः अनेकम् अर्थं वक्ति, असौ श्लेष इत्युच्यते । यथा—

पदार्थः—यत्र–यस्मिन् अलंकारे, हि–निश्चयेन, एकम्–अभिन्नमेव, वाक्यं–पदसमूहरूपं वचनम्, तैरेव–वाक्यगतैरेव सन्धिमाहात्म्येन रूपान्तराप्राप्तैः, भिन्नैर्वा–सन्धिमाहात्म्येन भेदं प्राप्तैर्वा, पदैः–सुप्तिङन्तशब्दैः, अनेकं–विविधम्, अर्थम्–अभिधेयम्, वक्ति–निरूपयति, असौ–एवंरूपः, श्लेष इति–श्लेषाख्योऽलङ्कारः, उच्यते–कथ्यते, यथा–इत्यव्ययपदम् अग्रिमपद्यमुदाहरणत्वेन निर्दिशति ।

भावार्थ—जिस अलंकार में निश्चयरूप से एक ही वाक्य, उन्हीं पदों के अथवा भिन्न पदों के द्वारा अनेक अर्थों का निरूपण या बोधन करता है, उसे श्लेष नामक अलंकार कहते हैं । जैसे—॥१२८॥

अथाभिन्नपदमूलं श्लेषमुदाहरति—

आनन्दमुल्लासयतः समन्तात्
करैरसन्तापकरैः प्रजानाम् ।
यस्योदये क्षोभमवाप्य राज्ञो
जग्राह वेलां किल सिन्धुनाथः ॥१२९॥

अन्वयः—सिन्धुनाथः समन्तात् असन्तापकरैः करैः प्रजानाम् आनन्दम् उल्लासयतः यस्य राज्ञः उदये क्षोभम् अवाप्य वेलां जग्राह किल ।

पदार्थः—सिन्धुनाथः–सिन्धोस्तन्नाम्नो देशस्य अथवा सिन्धूनां नदीनां नाथोऽधीश्वरः पतिश्च सिन्धुदेशाधिपतिः समुद्रश्चेत्यर्थः, समन्तात्–

परित, असन्तापकरै—अक्लेशेन अनायासेनैव दातुं शक्यै, अन्यत्र सन्तापाजनके, करै—राजदेयमार्गै, पक्षे किरणै, प्रजाना—जनाना प्रकृतीनामित्यर्थ, अन्यत्र साधारणजनानाम्, आनन्द-हर्षम्, उल्लासयत—समुत्पादयत, यस्य—कस्यापि प्रसिद्धस्य सर्वलोकविदितस्य, राज्ञ—भूपते, अन्यत्र चन्द्रमस, उदये—उन्नतौ अभ्युदये, अन्यत्र अभ्युद्गमे, क्षोभ—पराभवम्, अन्यत्र निजवृद्धिजनितचाञ्चल्यम्, अवाप्य—लब्ध्वा, वेला—समयम्, अन्यत्र तीरप्रदेशम्, जग्राह—यथाकथचित् अतिवाहयामासेत्यर्थ, अन्यत्र आश्लिष्टवानित्यर्थ। क्लिलेत्यव्यय प्रसिद्धौ। अत्र एकस्य वाक्यस्य अभिन्नैरेव सिन्धुनाथादिपदै राज्ञ समुद्रस्य च वर्णनेन अनेकार्थत्वमिति श्लेषालङ्कार।

भावार्थ—सिन्धु देश के राजा ने, हर तरह से बिना किसी तकलीफ के अदा किये जाने वाले टैक्सों के द्वारा प्रजा को प्रसन्न रखने वाले जिस प्रसिद्ध राजा का अभ्युदय होने पर, पराजय को प्राप्त करके जैसे तैसे अपना समय बिताया। अन्य पक्ष में—समुद्र ने चारों ओर से शान्ति देने वाली किरणों के द्वारा प्रजाओं को आनन्दित करने वाले, सर्वजनविदित, चन्द्रमा के उदय होने पर, अपनी वृद्धि जनित चञ्चलता को प्राप्त करके, किनारों का आलिङ्गन किया ॥१२६॥

भिन्नपदमूलं श्लेषमुदाहरति—

**कुर्वन् कुवलयोल्लासं रम्याम्भोजश्रियं हरन्।**
**रेजे राजापि तच्चित्रं निशान्ते कान्तिमत्तया ॥१३०॥**

अन्वय.—राजा अपि निशान्ते कुवलयोल्लासं कुर्वन् कान्तिमत्तया रम्याम्भोजश्रियं हरन् रेजे, तत् चित्रम्।

पदार्थ—राजा—कश्चित् भूमिपाल, अन्यत्र निशाकर, अपि निशान्ते—निजभवने, अन्यत्र निशाया रात्र्या अन्ते अवसाने, प्रभाते इत्यर्थ, कुवलयोल्लास—कु पृथिवी तस्या मण्डल भूमण्डलमित्यर्थ, तस्य तद्वासिनो जनसमुदायस्य उल्लासम् अभ्युदयम् आनन्दमिति यावत्, अन्यत्र कुवलयानाम् उत्पलानाम् उल्लास विकासम्, कुर्वन्—उत्पादयन्, कान्तिमत्तया—श्रीसम्पन्नतया सुन्दररूपवत्तया वा, अन्यत्र दीप्तियुक्ततया, रम्या—मनोहारिणीम्, भोजश्रियं भोजस्य तन्नाम्न प्रसिद्धस्य भूपते श्रियं राजलक्ष्मीं सौन्दर्यं वा, अन्यत्र

रम्याणि मनोहराणि यानि अम्भोजानि कमलानि तेषां श्रियं शोभाम्, हरन्-मुष्णन् न्यक्कुर्वन्, रेजे-शुशुभे, तत् चित्रम्-आश्चर्यमित्यर्थः। अत्र 'कुवलयोल्लासं' 'रम्याम्भोजश्रियं' 'निशान्ते' इत्येतेषां समस्तानां विग्रहे भिन्नैः पदैरनेकार्थप्रतिपादनाद् भिन्नपदमूलः श्लेषाऽलङ्कारः।

भावार्थ—वह राजा भी अपने राजमहल में, भूमण्डल को आनन्दित करता हुआ, तथा सौन्दर्य से, मनोहर एवं प्रसिद्ध भोजराज की श्री को हरण करता हुआ सुशोभित हुआ, यह आश्चर्य है। दूसरे चन्द्र पक्ष में—चन्द्रमा भी रात्रि के समाप्त हो जाने पर, कुमुदों को विकसित करता हुआ तथा दीप्ति युक्त होने के कारण रमणीय कमल की शोभा को तिरस्कृत करता हुआ सुशोभित हुआ; यह आश्चर्य है ॥१२०॥

क्रमप्राप्तं समुच्चयालङ्कारं लक्षयति

एकत्र यत्र वस्तूनामनेकेषां निबन्धनम्।
अप्युत्कृष्टापकृष्टानां तं वदन्ति समुच्चयम् ॥१२१॥

अन्वयः—यत्र एकत्र अनेकेषाम् अत्युत्कृष्टापकृष्टानां वस्तूनां निबन्धनं तं समुच्चयं वदन्ति।

पदार्थ—यत्र-यस्मिन्नलङ्कारे, एकत्र-एकस्मिन् स्थले पद्ये गद्ये वा, अनेकेषां-बहूनाम्, अत्युत्कृष्टापकृष्टानाम्-अत्युत्कृष्टानाम् अत्युत्तमानाम् अत्यपकृष्टानाम् अतिनिकृष्टानाम्, वस्तूनां-पदार्थानाम्, निबन्धनं-प्रथनम्, स्यादिति शेषः, तं-तथाविधम्, समुच्चयम्-एतदाख्यमलङ्कारम्, वदन्ति-कथयन्ति, अलङ्कारविद इति शेष.।

भावार्थ—जिस अलङ्कार में, एक ही जगह गद्य या पद्य में अनेक अति उत्तम अथवा अतिनिकृष्ट वस्तुओं का इकट्ठा प्रतिपादन कर दिया जाय, उसे समुच्चय नामक अलङ्कार कहते हैं ॥१२१॥

एकत्र उत्कृष्टवस्तुनिबन्धनकृतं समुच्चयमुदाहरति—

अणहिल्लपाटलं पुरमवनिपतिः कर्णदेवनृपसूनुः।
श्रीकलशनामधेयः करी च जगतीह रत्नानि ॥१२२॥

अन्वयः—इह जगति अणहिल्लपाटलं पुरं कर्णदेवनृपसूनुः अवनिपतिः श्रीकलशनामधेयश्च करी रत्नानि।

पदार्थ—इह-अस्मिन्, जगति-संसारे, अणहिल्लपाटलं-तदाख्यम्, पुरं-नगरम्, कर्णदेवनृपसूनु-कर्णदेवाभिधस्य भूपते पुत्र जयसिंहाख्य, अवनिपति-भुवो भर्त्ता, श्रीकलशनामधेयश्च-श्रीकलशाख्यश्च, करी-गज, रत्नानि-रत्नभूता सर्वश्रेष्ठा इत्यर्थ । अत्र बहूनामुत्कृष्टाना पदार्थानामेकत्र पद्ये निबन्धनात् प्रथमसमुच्चयालङ्कार ।

भावार्थ—इस ससार म, अणहिल्लपाटल नगर, कर्णदेव राजा का लडका जयसिंह पृथ्वीपति, और श्रीकलश नामक हाथी ये रत्न हैं ॥१३२॥

अथैकत्रापकृष्टवस्तुनिबन्धनकृतं समुच्चयमुदाहरति—

ग्रामे वासो नायको निर्विवेकः
कौटिल्यानामेकपात्रं कलत्रम् ।
नित्यं रोगः पारवश्यञ्च पुंसा-
मेतत्सर्वं जीवतामेव मृत्युः ॥१३३॥

अन्वयः—ग्रामे वासः, निर्विवेकः नायकः, कौटिल्यानाम् एकपात्रं कलत्रम्, नित्य रोगः, पारवश्यञ्च, एतत्सर्वं जीवतां पुंसां मृत्युरेव ।

पदार्थ—ग्रामे-क्षुद्रे जननिवासे यत्र सुखसाधन किमप्यावश्यकं वस्तु नोपलभ्यते तत्र, वास-निवसनम्, निर्विवेक-सदसद्विचाररहित, मूढ इति यावत्, नायक-ग्रामणी, तथा कौटिल्याना-धौर्त्याना छलकपटादीना वा, एकपात्रम्-अद्वितीयमाश्रयभूतम्, कलत्र-भार्या, नित्य-सर्वदैव, रोग व्याधि, पारवश्यम-पराधीनत्वञ्च, एतत-पूर्वोक्तमिद ग्रामवासादिकम्, सर्वं-समग्रम्, जीवता-प्राणान् धारयतामपि, पुंसां मनुष्याणाम्, मृत्युरेव-मरणमेव । एवम्भूत जीवनं जनाना मरणसदृशमेवेत्यर्थ । अत्र बहूनां निकृष्टवस्तूनामेकत्र निबन्धनाद् द्वितीयसमुच्चयालङ्कार ।

भावार्थ—गाँव में रहना, वहाँ मूर्ख मालिक का होना, अपनी भार्या का कपटी होना, सदा व्याधि का रहना, तथा पराधीनता, ये सब जीवित पुरुषों का मरण ही है ॥१३३॥

अथाप्रस्तुतप्रशंसां लक्षयति—

प्रशंसा क्रियते यत्राप्रस्तुतस्यापि वस्तुनः ।
अप्रस्तुतप्रशंसां तामाहुः कृतधियो यथा ॥१३४॥

अन्वयः—यत्र अप्रस्तुतस्य अपि वस्तुनः प्रशंसा क्रियते, कृतधियः ताम् अप्रस्तुतप्रशंसाम् आहुः । यथा—

पदार्थः—यत्र–यस्मिन्नलङ्कारे, अप्रस्तुतस्य–अप्रकृतस्य अपि वस्तुनः–पदार्थस्य, प्रशंसा–स्तुतिः, क्रियते–प्रतिपाद्यते, कृतधियः–कृता निश्चिता धीर्यैस्ते, निश्चितमतयो विद्वांस इत्यर्थः, ताम्–तथाभूताम्, तामिति विधेयप्राधान्येन स्त्रीत्वम्, अन्यथा पुंल्लिङ्गयच्छब्दवाच्यपरामर्शकतया पुस्त्वमेवोचितम् । अप्रस्तुतप्रशंसा–तदाख्यमलङ्कारम्, आहुः–कथयन्ति । यथा–इत्यव्ययपदम् अग्रिमोदाहरणभूतं पद्यं निर्दिशति ।

भावार्थ—जिस अलंकार में अप्रस्तुत वस्तु की प्रशंसा की जाय, विद्वान् उसे अप्रस्तुतप्रशंसा नामक अलंकार कहते हैं । जैसे—॥१३४॥

अप्रस्तुतप्रशंसामुदाहरति—

स्वैरं विहरति स्वैरं शेते स्वैरं च जल्पति ।
भिक्षुरेकः सुखी लोके राजचोरभयोज्झितः ॥१३५॥

अन्वयः—लोके एकः राजचोरभयोज्झितः भिक्षुः सुखी, स्वैरं विहरति स्वैरं शेते स्वैरं च जल्पति ।

पदार्थः—लोके–संसारे, एकः–केवलः, राजचोरभयोज्झितः–राज्ञः अपराधिनो दण्डयितुर्नृपतेः चोरात् तस्कराच्च धनापहारकाद् यद् भयं त्रासः तेन उज्झितः पृथग्भूतः, भिक्षुः–सन्यासी भिक्षामाश्रित्य केवलं जीवननिर्वाहको वा कश्चिद् दरिद्रः, सुखी–शङ्काराहित्येन सानन्दो वर्तत इति शेषः । अत एव सः स्वैरं–यथेच्छम्, विहरति–इतस्ततः परिभ्रमति, स्वैरं–निर्बाधम्, शेते–स्वपिति, स्वैरम्–इच्छानुरूपं च, जल्पति–भाषते । स्वातन्त्र्यमेव सर्वसुखसाधनमिति हेतोः विविधबाधनानुत्पत्तसामर्थ्यपेक्षया अकिंचनो भिक्षुरेवात्र जगति सुखीति भावः । अत्र अस्वतन्त्रस्य अशेषक्लेशोपहतस्य संसारिणः एव दुःखित्वप्रस्तावे, अप्रस्तुतस्य निरुपद्रवस्य भिक्षोः स्तवनाद् अप्रस्तुतप्रशंसाख्योऽलङ्कारः ।

भावार्थ—संसार में राजा और चोरों के भय से बिल्कुल बचा हुआ केवल भिक्षु ही सुखी है, जो इच्छानुसार इधर उधर घूमता है, बेखटके सोता है, और जब जी में आये बोलता है ॥१२५॥

क्रमप्राप्तामेकावलीं लक्षयति—

**पूर्वपूर्वार्थवैशिष्ट्यनिष्ठानामुत्तरोत्तरम् ।**
**अर्थानां या विरचना बुधैरेकावली मता ॥१२६॥**

अन्वयः—पूर्वपूर्वार्थवैशिष्ट्यनिष्ठानाम् अर्थानाम् उत्तरोत्तरं या विरचना, सा बुधैः एकावली मता ।

पदार्थ—पूर्वपूर्वार्थवैशिष्ट्यनिष्ठाना-पूर्वं पूर्वं प्राक्प्राग् निर्दिष्टा ये अर्था यानि वस्तूनि तेषां वैशिष्ट्ये उत्कृष्टत्वे निष्ठा निश्चयेन स्थितिर्येषु तथा भूतानाम्, अर्थानां-वस्तूनाम्, उत्तरोत्तरं-परं परम्, या विरचना-विशेषेण निर्मितिः शोभनो विन्यास इति यावत्, सा बुधैः-विद्वद्भिः, एकावली-तदाख्यालङ्कृतिः, मता-स्वीकृता ।

भावार्थ—जिस जगह पहिले पहिले कहे हुए उत्कृष्ट पदार्थों की उत्तरोत्तर विशेषता पूर्वक रचना होती चली जाय, उसे विद्वान् एकावली अलङ्कार कहते हैं ॥१२६॥

एकावलीमुदाहरति—

**देशः समृद्धनगरो नगराणि च सप्तभूमिनिलयानि ।**
**निलयाः सलीलललना ललनाश्चात्यन्तकमनीयाः ॥१२७॥**

अन्वय.—देशः समृद्धनगरः, नगराणि च सप्तभूमिनिलयानि, निलयाः सलीलललनाः, ललनाश्च अत्यन्तकमनीयाः ।

पदार्थ—देशः-जनपदः, समृद्धनगरः-समृद्धानि धनधान्यादिना सम्पन्नानि नगराणि पत्तनानि यत्र तथाभूतः, नगराणि-पुराणि च, सप्तभूमिनिलयानि-सप्त सप्तसङ्ख्याका भूमयः कक्षा निलयानाम् आवासगृहाणां यत्र तथाभूतानि, सप्ततलगृहव्याप्तानीत्यर्थः, निलयाः-आवासगृहाणि च, सलीलललनाः लीलया क्रीडया विलासेन सह वर्तमाना ललना अङ्गना यत्र तादृशाः सविलासरमणीपरिपूर्णा इत्यर्थः, ललनाः-रमण्यश्च, अत्यन्तकमनीयाः-अतिशयसौन्दर्यशालित्वात् मनोहारिण्य इत्यर्थः । अत्र पूर्वपूर्वेषां समृद्धनगरादीनाम् उत्तरोत्तरं वैशिष्ट्यप्रतिपादनाद् एकावल्यलङ्कारः ।

भावार्थ—सम्पत्तिशाली नगरों से युक्त देश ही उत्तम होता है, नगर भी सतमजले मकानों से युक्त हैं, वे मकान भी विलास युक्त रमणियों से परिपूर्ण हैं, और रमणी भी अत्यन्त मनोहारिणी है ॥१३७॥

क्रमप्राप्तमनुमानालङ्कारं लक्षयति—

प्रत्यक्षाल्लिङ्गतो यत्र कालत्रितयवर्तिनः।
लिङ्गिनो भवति ज्ञानमनुमानं तदुच्यते ॥१३८॥

अन्वयः—यत्र प्रत्यक्षात् लिङ्गतः कालत्रितयवर्तिनः लिङ्गिनः ज्ञानं भवति, तत् अनुमानम् उच्यते।

पदार्थ—यत्र-यस्मिन्नलंकारे, प्रत्यक्षात्-इन्द्रियेण गृह्यमाणात्, लिङ्गत-साधनात्, कालत्रितयवर्तिन-अतीतानागतवर्तमानकालत्रयभाविन, लिङ्गिन-अनुमेयस्य पदार्थस्य, साध्यस्येति यावत्, ज्ञानम्-अवबोध, भवति-जायते, तत् अनुमान-तदाख्योऽलङ्कार, उच्यते-कथ्यते।

भावार्थ—जिस अलकार में, प्रत्यक्ष लिङ्ग अर्थात् हेतु के द्वारा, तीनों कालों में होने वाले लिङ्गी अर्थात् साध्य अर्थ का बोध हो जाता है, उसे अनुमान अलकार कहा जाता है ॥१३८॥

प्रत्यक्षाल्लिङ्गाद् अतीतलिङ्गिबोधरूपमनुमानमुदाहरति—

नूनं नद्यस्तदाभूवन्नभिषेकाम्भसा प्रभोः।
अन्यथा कथमेतासु जनः स्नानेन शुद्ध्यति ॥१३९॥

अन्वयः—नूनं तदा प्रभोः अभिषेकाम्भसा नद्यः अभूवन्, अन्यथा जनः एतासु स्नानेन कथं शुद्ध्यति?।

पदार्थ—नून-निश्चयेन, तदा-तस्मिन् समये अभिषेककाल इत्यर्थ, प्रभो-भगवतो बुद्धदेवस्य, कस्यचिद् भूपतेर्वा, अभिषेकाम्भसा-राज्याधिरोहणकालिकस्नानसलिलेन, नद्य-सरित, अभूवन्-अजायन्त, अन्यथा-नो चेत्, जन-लोक, एतासु-सरित्सु, स्नानेन-अवगाहनेन, कथं-कया रीत्या, शुद्ध्यति-पवित्रो भवति? अत्र प्रत्यक्षात् नदीजलस्नानजनितशुद्धिरूपाल्लिङ्गात्, अभिषेकजलेन नदीनामुत्पत्तिरूपस्य अतीतकालवर्तिन साध्यस्यानुमान भवतीत्यनुमानालकार।

भावार्थ—निश्चय ही मालूम यह होता है कि अभिषेक समय में प्रभु के

अभिषेक जल से नदियों की उत्पत्ति हुई, नहीं तो इनमें स्नान करने से मनुष्य शुद्ध कैसे हो जाता ॥१३९॥

**प्रत्यक्षाल्लिङ्गाद् अनागतवस्तुनो बोधरूपमनुमानमुदाहरति—**

**जम्भभित्ककुभि ज्योतिर्यथा शुभ्रं विजृम्भते।**
**उदेष्यति तथा मन्ये खलः सखि! निशाकरः ॥१४०॥**

**अन्वयः—सखि! जम्भभित्ककुभि यथा शुभ्रं ज्योति विजृम्भते, मन्ये तथा खलः निशाकरः उदेष्यति।**

पदार्थ—सखि!—हे सहचरि! जम्भभित्ककुभि—जम्भाभिधमसुर भिनत्ति विदारयतीति जम्भभित् इन्द्र तस्य ककुभि दिशि तदुपलक्षिताया पूर्वस्या दिशीत्यर्थ, यथा—येन प्रकारेण, शुभ्र—धवलम्, ज्योति—प्रभा, विजृम्भते प्रकाशते, मन्ये—सम्भावयामि अनुमिनोमीत्यर्थ, तथा—तेनैव प्रकारेण खल—दुष्ट सतापकारी, निशाकर—चन्द्र, उदेष्यति—उद्गमिष्यति। कस्य चित्सख्या विरहिणीं प्रत्युक्तिरियम्, अत्र प्रत्यक्षात् शुभ्रज्योति प्रकाशरूप लिङ्गात् भविष्यतश्चन्द्रोदयरूपस्य लिङ्गिनोऽनुमानाद् अनुमानालंकार।

भावार्थ—हे सखि! पूर्व दिशा में जिस प्रकार यह शुभ्र ज्योति प्रकाशित हो रही है, मैं समझती हू, इसी प्रकार दुष्ट सतापकारी चन्द्रमा भी प्रकाशित होगा ॥१४०॥

**प्रत्यक्षाल्लिङ्गात् वर्तमानवस्तुनो बोधरूपमनुमानमुदाहरति—**

**मुखप्रभाबाधितकान्तिरस्या**
**दोषाकरः किङ्करतां बिभर्त्ति।**
**तल्लोचनश्रीहृतिसापराधा-**
**न्यब्जानि नो चेत् किमयं छिणोति? ॥१४१॥**

**अन्वय—दोषाकरः मुखप्रभाबाधितकान्तिः अस्याः किंकरतां बिभर्त्ति, नो चेत् अयं तल्लोचनश्रीहृतिसापराधानि अब्जानि किं छिणोति?।**

पदार्थ—दोषाकर—दोषा रात्रिस्तां करोतीति दोषाकरश्चन्द्र, दोष णामाकर इत्यप्यर्थो व्यज्यते, मुखप्रभाबाधितकान्ति—एतन्मुखस्य वदनस्य या प्रभा कान्तिस्तया बाधिता न्यक्कृता कान्ति शोभा यस्य तथाभू

सन्, अस्या–कान्तायाः, किंकरतां–सेवकताम्, बिभर्त्ति–धारयति, नो चेत्–अन्यथा, अयं–दोषाकरः, तल्लोचनश्रीहृतिसापराधानि–तस्याः कान्ताया ये लोचने नेत्रे तयोः श्रियाः शोभाया हृत्या अपहरणेन सापराधानि अपराधयुक्तानि, अब्जानि–कमलानि, किं–कथम्, क्षिणोति–उपताफ्यति ? प्रभुभक्तो हि सेवकः प्रभुशत्रून् यथाशक्यं पीडयत्येवेति भावः । अत्र प्रश्नवात् कमलपीडनाद्लिंगात् वर्तमानकालसम्बन्धिनो लिङ्गिनः दोषाकरकिंकरत्वस्य बोधाद् अनुमानालङ्कारः ।

भावार्थ—चन्द्रमा, उस के मुख की प्रभा से हीनकान्ति हुआ २, उसका सेवक बन रहा है, नहीं तो उसके नेत्रों की कान्ति को चुराने के कारण अपराधी कमलों को वह पीड़ित क्यों करता ? ॥१४१॥

क्रमप्राप्तं परिसंख्यालङ्कारं लक्षयति—

यत्र साधारणं किञ्चिदेकत्र प्रतिपाद्यते ।
अन्यत्र तन्निवृत्त्यै सा परिसंख्योच्यते बुधैः ॥१४२॥

अन्वयः—यत्र साधारणं किञ्चिद् अन्यत्र तन्निवृत्त्यै एकत्र प्रतिपाद्यते, बुधैः सा परिसंख्या उच्यते ।

पदार्थ—यत्र–यस्मिन् काव्ये, साधारणं–सामान्यम्, किञ्चित्–किमपि वस्तु, अन्यत्र–अन्यस्मिन् वाक्ये, तन्निवृत्त्यै–तस्य वस्तुनः निवृत्त्यर्थम्, एकत्र–एकस्मिन् स्थले, प्रतिपाद्यते–निरूप्यते, बुधैः–विद्वद्भिः सा, परिसंख्या–तदाख्योऽलङ्कारः, उच्यते–कथ्यते । 'बुधैः' इत्यत्र 'यथा' इति पाठान्तरम्, तत्र तु पूर्ववद् यथाशब्द उदाहरणप्रदर्शनार्थः ।

भावार्थ—जहाँ साधारण कोई भी वस्तु, दूसरी जगह पर उसकी निवृत्ति करने के लिये, किसी एक जगह निरूपण की जावे, विद्वान् उसे परिसंख्या अलङ्कार कहते हैं ॥१४२॥

परिसंख्याऽलङ्कारमुदाहरति—

यत्र वायुः परं चौरः पौरसौरभसम्पदाम् ।
युवानो यत्र राजन्त एकनिश्चितमीतयः ॥१४३॥

अन्वयः—यत्र परं वायुः पौरसौरभसम्पदां चौरः, यत्र युवानः एकनिश्चितमीतयः राजन्ते ।

पदार्थ —यत्र–यस्यां नगर्याम्, परं–केवलमेक एव, वायु–पवन, पौरसौरभसम्पदा–पौराणि पुरे नगरे भवानि यानि सौरभाणि सौगन्ध्यानि तान्येव सम्पदः सम्पत्तयः समृद्धय तासाम्, चौर–तस्कर, यत्र–यस्यां नगर्याम्, युवान–तरुणा, एकनिक्षिप्तभीतय–एकस्मिन् धर्मे एव निक्षिप्ता अवस्थापिता भीति भय यैस्तथाभूता, राजन्ते–शोभन्ते। उत्तरार्द्धस्य 'युवानश्च कृतक्रोधादेव बिभ्युर्वधूजनात्' इत्यपि पाठ उपलभ्यते। अस्मिन् पाठे तु युवान–तरुणा, कृतक्रोधात्–कृतो विहितः क्रोधो मान रूप कोपो येन तथाभूतात्, वधूजनात्–मानिनीजनात्, एव–केवलम्, बिभ्यु–भय प्रापु, नान्यस्मात् हिंसाशीलात् पश्वादेरित्यर्थ। अत्र अन्यस्मिन् कस्मिंश्चिदपि चौर्यनिवृत्त्यर्थं वायावेव तच्चौर्यं प्रतिपादितम्, एवं तरुणानाम् अन्यत्र व्याघ्रादिषु भीतिनिवृत्त्यर्थं धर्मे वधूजन एव वा भीति व्यवस्थापिता, एवमिह परिसंख्याऽलङ्कार सिद्ध्यति।

भावार्थ—जहां पर केवल वायु ही, नगर में होने वाली सौरभ रूप सम्पत्ति का चोर है। तथा जहां नौजवान केवल धर्म में ही अथवा कुपित वधूजन में ही भय रखते हुए सुशोभित होते हैं॥१४३॥

प्रश्नोत्तरं संकरं चालङ्कारमेकेनैव लक्षयति—

प्रश्ने यत्रोत्तरं व्यक्तं गूढं वाऽप्यथवोभयम्।
प्रश्नोत्तरं तथोक्तानां संसर्गं संकरं विदुः॥१४४॥

अन्वयः—यत्र प्रश्ने उत्तरं व्यक्तं वा गूढम् अथवा उभयम् अपि, प्रश्नोत्तरम्। तथा उक्तानां संसर्गं संकरं विदुः।

पदार्थ —यत्र–यस्मिन् काव्ये, प्रश्ने–जिज्ञासायां सत्याम्, उत्तर–प्रतिवचनम्, व्यक्त–स्पष्टम्, वा–अथवा, गूढम्–अव्यक्तम्, अथवा–किंवा, उभय–व्यक्तमव्यक्त चापि, स्यादिति शेष, तथाविधमलङ्कारं प्रश्नोत्तर–प्रश्नोत्तराभिधम्, तथा–एव च, उक्तानां–पूर्वनिरूपितानां शब्दार्थालङ्काराणाम्, संसर्ग–सम्मेलनम्, संकर–संकराख्यमलङ्कारम्, विदु–जानन्ति, आलङ्कारिका इति शेष।

भावार्थ—जिस रचना में, प्रश्न किये जाने पर उसका उत्तर स्पष्ट, अस्पष्ट अथवा उभयरूप हो, उसे प्रश्नोत्तर नामक अलङ्कार कहते हैं।

तथा जहां अनेक अलङ्कार इकट्ठे हो जायं, वहां संकर नामक अलङ्कार कहा जाता है ॥१४४॥

व्यक्तोत्तरं प्रश्नोत्तरालङ्कारमुदाहरति—

अस्मिन्नपारसंसारसागरे मज्जतां सताम्।
किं समालम्बनं ? साधो ! रागद्वेषपरिक्षयः ॥१४५॥

अन्वयः—साधो ! अस्मिन् अपारसंसारसागरे मज्जतां सतां किं समालम्बनम् ? रागद्वेषपरिक्षयः।

पदार्थः—साधो !-हे सज्जन ! अस्मिन्-परितो दृश्यमाने, अपार-संसारसागरे-दुस्तरे भवाब्धौ, मज्जतां-निपतताम्, सतां-सज्जनानाम्, किं-कः पदार्थः, समालम्बनम्-आश्रयभूतः ? इति प्रश्नः। अस्योत्तरम्-रागद्वेषपरिक्षयः-राग आसक्तिः पुत्रकलत्रादिषु, द्वेषो वैरं प्रतिपक्षादिषु, तयोः परिक्षयः सर्वथा नाश इत्यर्थः। अत्र संसारसागरे मज्जतां किं समालम्बनमिति प्रश्ने रागद्वेषपरिक्षय इति व्यक्तोत्तरस्य सत्त्वात् व्यक्तोत्तर-मूल. प्रश्नोत्तरालङ्कारः।

भावार्थ—हे सज्जन ! इस अपार संसार सागर में डूबते हुए भले आदमियों के लिये क्या सहारा है ? राग और द्वेष का सर्वथा नाश ॥१४५॥

गूढोत्तरं प्रश्नोत्तरालङ्कारमुदाहरति—

क्व वसन्ति श्रियो नित्यं भूभृतां ? वद कोविद !।
असावतिशयः कोऽपि यदुक्तमपि नोह्यते ॥१४६॥

अन्वयः—कोविद ! वद, भूभृतां श्रियः नित्यं क्व वसन्ति ? असौ कोऽपि अतिशयः, यद् उक्तमपि न ऊह्यते।

पदार्थः—कोविद !-हे विद्वन् ! वद-कथय, भूभृतां-राज्ञाम्, श्रियः-सम्पदः, नित्यं-निरन्तरम्, क्व-कुत्र, वसन्ति-तिष्ठन्ति ? इति प्रश्नः। अस्योत्तरम्-असौ-अयं श्रिया निवासः, कोऽपि असाधारणः, अतिशयः-विलक्षणः पदार्थः, यत् उक्तमपि-कथितमपि, न ऊह्यते-ज्ञायते, राज-सम्पदां स्थितिस्थानं कथितमपि ज्ञातुं शक्यते लोकैरित्याशयः। इदं गूढोत्तरम्। राजश्रियः क्व निवसन्तीति प्रश्ने, असौ करवाले खड्गे राज-सम्पदां वास इति विवक्षितमुत्तरम्। अत्र असिशब्दस्य सप्तम्येकवचने

असदस्शब्दस्य च प्रथमैकवचने रूपसाम्याच्चिगूढता, तस्मादय गूढोत्तरमूल प्रश्नोत्तरालङ्कार ।

भावार्थ—पण्डित जी ! कहो, राजाओं की सम्पत्तियां सदा कहां निवास करती हैं ? [ गूढ उत्तर ] यह एक असाधारण विलक्षण पदार्थ है, जिसका वह देख कर भी लोग समझ नहीं पाते । [ विवक्षित उत्तर ] असौ—असि अर्थात् तलवार में ही सदा राजसम्पत्तियों [redacted] निवास रहता है ॥१४६॥

गूढागूढोभयरूप प्रश्नोत्तरालङ्कारमुदाहरति—

**किमैभं श्लाघ्यमाख्याति ? पक्षिणं कः ? कुतो यशः ।**
**गरुडः कीदृशो नित्यं ? दानवारिविराजितः ॥१४७॥**

अन्वय—ऐभ किं श्लाघ्यम् ? कः पक्षिणम् आख्याति ? कुतः यशः ? गरुड कीदृशः ? दानवारिविराजित ।

पदार्थ—ऐभम्–इभो गज तस्येदमैभम्, गजसम्बन्धीत्यर्थ, किं–कत मद् वस्तु, श्लाघ्य–प्रशसनीयम् ? क–कतम शब्द, पक्षिण–खगम्, आख्याति–कथयति ? कुत –कस्मात् कारणात्, यश –कीर्ति, भवतीति शेष, गरुड –स्वनामप्रसिद्ध पक्षिविशेष, नित्य–सदा, कीदृश –कथम्भूत ? इत्येते चत्वार प्रश्ना । तेषा क्रमेणोत्तरमाह—दानवारिविराजित । तत्र प्रथमप्रश्नस्योत्तरम्—दानवारि–मदजलमित्यर्थ । द्वितीयप्रश्नस्योत्तरम्–वि –पक्षी इति । तृतीयप्रश्नस्योत्तरम्—आजित –सग्रामादित्यर्थ । एतानि त्रीणि अस्पष्टार्थतया गूढोत्तराणि । चतुर्थप्रश्नस्योत्तर तु—दानवारिविराजित –दानवाना दैत्यानामरि शत्रु विष्णुरित्यर्थ, तेन विराजित शोभित । इद स्पष्टार्थं तया अगूढोत्तरम् । एव चात्र गूढागूढोभयरूपोत्तरमूल प्रश्नोत्तरालङ्कार ।

भावार्थ—हाथी से सम्बन्ध रखने वाली कौन सी वस्तु प्रशसनीय होती है ? कौन सा शब्द पक्षी को कहता है ? यश किस कारण से प्राप्त होता है ? गरुड सदा कैसा रहता है ? [ इन चार प्रश्नों का उत्तर चतुर्थ चरण में दिया गया है—दानवारिविराजित । प्रश्नों का उत्तर— ] १–मदजल, २–वि अर्थात् पक्षी, ३–आजि अर्थात् सग्राम से, ४–दानवों के शत्रु विष्णु के द्वारा सदा सुशोभित ॥१४७॥

सङ्करालङ्कारं प्राकृतेनोदाहरति—

बम्भण्डसुत्तिसंपुडमोत्तिअमणिणो प्पहासमूह व्व ।
सिरिवाहड त्ति तणओ आसि बुहो तस्स सोमस्स ॥१४८॥

अस्य संस्कृतम्—

ब्रह्माण्डशुक्तिसम्पुटमौक्तिकमणेः प्रभासमूह इव ।
श्रीवाग्भट इति तनय आसीद् बुधस्तस्य सोमस्य ॥

अन्वयः—ब्रह्माण्डशुक्तिसम्पुटमौक्तिकमणेः तस्य सोमस्य प्रभासमूह इव श्रीवाग्भट इति बुधः तनयः आसीत् ।

पदार्थ—ब्रह्माण्डशुक्तिसम्पुटमौक्तिकमणेः—ब्रह्माण्ड सकल जगदेव शुक्तिसम्पुटो मुक्तास्फोटरूप आधारविशेष, तस्य यो मौक्तिकमणि मुक्तारत्नम् एवंभूतस्य, तस्य—प्रसिद्धस्य, सोमस्य—तन्नाम्नो वाग्भटजनकस्य, चन्द्रस्य च, प्रभासमूह इव—दीप्तिराशिरिव, श्रीवाग्भट इति—श्रीवाग्भट इत्याख्य, बुध—विद्वान्, बुधनामको ग्रहश्च, बुधो ग्रहश्चन्द्रमसो जायत इति ज्योतिःशास्त्रविद । तनय—पुत्र,—आसीत्—अभूत् । अत्र ब्रह्माण्डेत्यादि रूपक प्रभासमूह इवेत्युत्प्रेक्षा, सोमस्य तनय बुध इति श्लेष, सर्वस्मिन् पद्ये स्वभावोक्तेश्च जाति, एव चतुर्णामलङ्काराणामेकत्र समावेशात् सङ्कराख्योऽलङ्कार ।

भावार्थ—ससाररूपी सीपी के मोती, उस प्रसिद्ध सोम [वाग्भट के पिता और चन्द्रमा] का, श्रीवाग्भट नामक बुध अर्थात् विद्वान् [और बुध नामक ग्रह] पुत्र हुआ । वह पुत्र क्या था ? मानो प्रभाओं का समूह था ॥१४८॥

नन्वन्येषामप्यलङ्काराणां ग्रन्थान्तरेष्वाचार्यैः प्रतिपादितत्वात् कथमेत एवालङ्कारा इत्यपेक्षायामाह—

अचमत्कारिता वा स्यादुक्तान्तर्भाव एव वा ।
अलङ्क्रियाणामन्यासामनिबन्धनिबन्धनम् ॥१४९॥

अन्वय—अन्यासाम् अलंक्रियाणाम् अनिबन्धनिबन्धनम् अचमत्कारिता वा उक्तान्तर्भाव एव वा स्यात् ।

पदार्थ—अन्यासाम्—उक्तातिरिक्तानाम्, अलंक्रियाणाम्—अलङ्काराणाम्,

अनिबन्धनिबंन्धनम्–अनिबन्धस्य अत्र ग्रन्थेऽप्रतिपादनस्य निबन्धनं कारणम्, अचमत्कारिता वा–चमत्काराहित्यं विचित्रविशेषार्थानभिधायकत्व वा, उक्तान्तर्भाव एव वा–अथवा उक्तेषु अस्मिन्नेव ग्रन्थे निरूपितेषु अलङ्कारेषु अन्तर्भाव मध्ये निवेश एकरूपतया अभेदप्रतिपादनम्, स्यात्–भवेत्। पदार्थयोश्चमत्कारित्वमेव अलंकारबीजम्, तदभावे न वयं तथाविधानामलंकारत्वमेव स्वीकुर्मः। चमत्कारित्वे तु तेषामप्यस्मिन् ग्रन्थे निरूपितेष्वलंकारेष्वेवान्तर्भाव ऊह्य इति भाव ।

भावार्थ—जो अलङ्कार अन्य ग्रन्थों में होते हुए भी यहां नहीं कहे गये हैं, उन के यहां प्रतिपादन न करने का यही कारण है कि या तो उन में कोई चमत्कृत पद या अर्थ नहीं है, अथवा उन का यहां कथित अलंकारों में ही अन्तर्भाव हो जाता है ॥१४६॥

साम्प्रतमलङ्कारप्रकरणमुपसंहरति—

अर्थेन येनातिचमत्करोति
प्रायः कवित्वं कृतिनां मनःसु ।
अलंक्रियात्वेन स एव तस्मिन्
अनूह्यतां हन्त ! दिशाऽनयैव ॥१५०॥

अन्वयः—हन्त ! कृतिनां मनःसु कवित्वं प्रायः येन अर्थेन अतिचमत्करोति, तस्मिन् स एव अलंक्रियात्वेन अनया एव दिशा अनूह्यताम् ।

पदार्थ—हन्त !–भो ! कृतिनां–विदुषां सहृदयसामाजिकानामित्यर्थ, मनःसु–चेतःसु, कवित्वं–काव्यम्, प्रायः–बाहुल्येन, येन–यथाभूतेन, अर्थेन–वस्तुना, अतिचमत्करोति–अतिशयेन वैचित्र्यमापादयति, तस्मिन् तथाभूते काव्ये स एव–तादृश एवार्थ, अलंक्रियात्वेन–अलंकारत्वेन अलंकारात्मनेत्यर्थः, अनया एव–अनिर्दिष्टया एव, दिशा–रीत्या, अनूह्यताम्–अवगम्यताम्, अवधार्यतामित्यर्थः । एतद्ग्रन्थनिरूपितालङ्काराहीनमपि काव्यं यदि सहृदयसामाजिकानां चेतांसि चमत्करोति, तदा तस्यापि काव्यस्य सालंकारत्वमस्त्येवेति भाव ।

भावार्थ—विद्वानों के मन में, कविता प्राय जिस वस्तु के द्वारा अति•

ग्य चमत्कार को उत्पन्न करती है, उस काव्य में वही वस्तु, मेरी कही हुई रीति के अनुसार अलङ्कार समझनी चाहिए ॥१५०॥

एवं व्यासेन शब्दार्थालङ्कारान् निरूप्य साम्प्रतम्—'साधुशब्दार्थसन्दर्भं गुणालङ्कारभूषितम्। स्फुटरीतिरसोपेतम्' इति क्रमानुरोधेन अवसरप्राप्तां रीतिमाह—

द्वे एव रीती गौडीया वैदर्भी चेति सान्तरे।
एकाः भूयःसमासा स्यादसमस्तपदाऽपरा ॥१५१॥

अन्वयः—गौडीया वैदर्भी चेति सान्तरे द्वे एव रीती, एका भूयःसमासा अपरा असमस्तपदा स्यात्।

पदार्थ—गौडीया—गौडदेशप्रसिद्धा, तत्रत्यकविजनोपज्ञा इत्यर्थः, तथा वैदर्भी—विदर्भदेशप्रसिद्धा च, इति—एवम्, सान्तरे—सविशेषे मिथः प्रभेदशालिन्यौ, द्वे एव—द्विधा भिन्ने एव, रीती—पदरचनाविशेषरूपे भवतः इति शेषः। तत्र एका—प्रथमा गौडीया, भूयःसमासा—भूयांसो बहवोऽधिकतर समासाः समस्तपदसमूहा यत्र तथाभूता, अपरा—अन्या वैदर्भी च, असमस्तपदा—असमस्तानि समासरहितानि पदानि सुप्तिङन्तानि यस्यां तथाभूता, प्रायिकमेतत्, तेन क्वचिल्लघुसमाससत्त्वेपि न वैदर्भीरीतिहानिः। स्यात्—भवेत्।

भावार्थ—एक दूसरी से भेद रखने वाली, गौडीया और वैदर्भी नाम की दो ही रीति हैं। उनमें एक गौडीया अधिक समासों से युक्त होती है, और दूसरी वैदर्भी प्राय, समास रहित पदों वाली होती है ॥१५१॥

तत्र प्रथमं गौडीयां रीतिमुदाहरति—

दर्पोत्पाटिततुङ्गपर्वतशतग्रावप्रपाताहति-
क्रूराक्रन्ददतुच्छकच्छपकुलक्रेङ्कारघोरीकृतः।
निश्वं वर्वरवध्यमानपयसः सिप्रापगायाः स्फुर-
न्नाक्रामत्ययमक्रमेण बहुलः कल्लोलकोलाहलः ॥१५२॥

अन्वयः—वर्वरवध्यमानपयसः सिप्रापगायाः दर्पोत्पाटिततुङ्गपर्वतशतग्रावप्रपाताहतिक्रूराक्रन्ददतुच्छकच्छपकुलक्रेङ्का-

रघोरीकृतः स्फुरन् बहुलः अयं कल्लोलकोलाहलः अक्रमेण विश्वम् आक्रामति।

पदार्थ—वर्वरवध्यमानपयस–वर्वराख्य कश्चिद्राक्षसस्तेन वध्यमानानि निरुध्यमानानि पयांसि जलानि यस्या एवभूताया, सिप्रापगाया–सिप्राख्य-सरित, दर्पोत्पाटित० घोरीकृत–दर्पेण अभिमानेन उत्पाटिता उन्मूलिता ये तुङ्गा अत्युच्चा पर्वता शैलास्तेषा शतस्य समूहस्य ग्राव्णा प्रस्तराणा प्रपातेन प्रकृष्टपतनेन या आहति आघातस्तया क्रूरम् उत्कट यथा स्यात्तथा आक्रन्दत चीत्कार विदधत अतुच्छा महान्तो ये कच्छपा कूर्मा तेषा कुल समूह तस्य केङ्कारेण तज्जातयुआरितध्वनिविशेषेण घोरीकृत भयकरता प्रापित इत्यर्थ, स्फुरन्–परितो विस्तार गच्छन्, बहुल–अतिमहान्, अयम्–आकर्ण्यमान, कल्लोलकोलाहल–जलतरगकलकल, अक्रमेण–सहसैव, विश्व–सकल जगत्, आक्रामति–व्याप्नोति। अत्र समासबाहुल्येन गौडीया रीति।

भावार्थ—वर्वर नामक राक्षस के द्वारा रोके हुए जल वाली सिप्रा नदी का, घमण्ड से उखाड़े हुए ऊँचे पहाड़ों के अपरिमित पत्थरों के गिरने से चोट खाये हुए और इसी लिये उत्कट चीत्कार करते हुए बड़े २ कछुवों के तीखे शब्द से भयकर बना हुआ, चारों ओर विस्तार को प्राप्त होता हुआ, बहुत बड़ा यह लहरों का शोर, एकदम सारे ससार को व्याप्त कर रहा है ॥१५२॥

अपरां वैदर्भीं रीतिमुदाहरति—

विप्राः प्रकृत्यैव भवन्ति लोला
लोकोक्तिरेषा न मृषा कदाचित्।
यच्चुम्ब्यमानां मधुपैर्द्विजेशः
श्लिष्यत्यसौ कैरविणीं कराग्रैः ॥१५३॥

अन्वय—विप्राः प्रकृत्या एव लोला भवन्ति, एषा लोकोक्तिः कदाचित् मृषा न, यत् असौ द्विजेशः मधुपैः चुम्ब्यमानां कैरविणीं कराग्रैः श्लिष्यति।

पदार्थ—विप्राः–द्विजा ब्राह्मणा, प्रकृत्या–स्वभावेन, एव लोला–चञ्चला अधीरा वा, भवन्ति–जायन्ते, एषा–इयम्, लोकोक्ति–जनप्रवाद,

कदाचित्–कदापि, मृषा–मिथ्या, न–नास्तीत्यर्थः । यत्–यस्मात् कारणात्, असौ–अवलोक्यमानः, द्विजेशः–द्विजपतिश्चन्द्र इत्यर्थः, मधुपैः–भ्रमरैः, मद्यपैश्च, चुम्ब्यमानां आस्वाद्यमानवदनाधरामृताम्, कैरविणीं–कुमुदिनीम्, कामिनीं च काञ्चित्, कराग्रैः–किरणाग्रभागैः, हस्ताग्रैरङ्गुलिभिश्च, स्पृश्यति–स्पृशति, आलिङ्गति च । अत्र प्रायेण रचनाया समासराहित्येन वैदर्भी रीतिः ।

भावार्थ—द्विज [ब्राह्मण] स्वभाव से ही चञ्चल होते हैं, यह लोकोक्ति कदापि झूठी नहीं है। क्योंकि यह द्विजेश [ब्राह्मणों का राजा और चन्द्रमा], मधुप अर्थात् भ्रमरों [और शराबियों] से चुम्बन की हुई कुमुदिनी [और कामिनी] को अपनी किरणों [और अङ्गुलियों] से छू रहा है [तथा आलिंगन कर रहा है] ॥१५३॥

इति वाग्भटालङ्कारव्याख्यायां बालबोधिन्यां
चतुर्थः परिच्छेदः ।



# पञ्चमः परिच्छेदः ।

साधुपाकेऽप्यनास्वाद्यं भोज्यं निर्लवणं यथा ।
तथैव नीरसं काव्यमिति ब्रूमो रसानिह ॥१॥

अन्वयः—यथा साधुपाके अपि निर्लवणं भोज्यम् अनास्वाद्यम् (भवति)। तथा एव नीरसं काव्यम् (अपि अनास्वाद्यं भवति) इति (वयम्) इह रसान् ब्रूमः ।

पदार्थ —काव्यलक्षणे स्फुटरीतिरसोपेतमित्युक्तम्, तत्र रीतयः पुरस्तादुपवर्णिता । इदानीमवसरसङ्गत्या रसं वर्णयितुमवतारयति–साधुपाक इति । यथा–येन प्रकारेण, साधुपाके–पाके–सुष्ठुतया निष्पन्नेऽपि निर्लवणम्–लवणरहितम्, भोज्यम्–भोजनम्, अनास्वाद्यम्–आस्वादयितुमयोग्यम्, भवति, तथैव, नीरसम्–रसविवर्जितम्, काव्यमप्यनास्वाद्यं भवति, इति हेतो, वयम्, इह–पञ्चमे परिच्छेदे, रसान्–शृङ्गारादिरसान्, ब्रूम –प्रतिपादयाम ।

भावार्थ—जैसे अच्छी तरह पका हुआ भी भोजन यदि अलोना हो तो स्वादु नहीं लगता, इसी प्रकार काव्य भी यदि नीरस हो तो आस्वाद के योग्य नहीं होता, इसलिये हम इस पञ्चम परिच्छेद में रसों का निरूपण करते हैं॥१॥

विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः ।
आरोप्यमाण उत्कर्षं स्थायी भावो रसः स्मृतः ॥२॥

अन्वयः—विभावैः अनुभावैः सात्त्विकैः व्यभिचारिभिः च उत्कर्षम् आरोप्यमाणः स्थायी भावः रसः स्मृतः ।

पदार्थ —विभावै –नायकनायिकादिभिरालम्बनै, चन्द्रचन्द्रिकादिभिरुद्दीपनै, अनुभावै –कटाक्षभुजाक्षेपप्रभृतिभि कार्यै, सात्त्विकै–सत्त्वाद् रजस्तमोभ्यामनास्पृष्टान् मनस सम्भूता सात्त्विका स्तम्भस्वेदादयो[1] विकारा, तै, व्यभिचारिभि –निर्वेदादिभिश्च, उत्कर्षम्–परिपोषम्–आस्वादयोग्यतामिति यावत्, आरोप्यमाण –प्राप्यमाण, स्थायी–वासनारूपेण अन्त-

१ स्तम्भ स्वेदोऽथ रोमाञ्च स्वरभङ्गोऽथ वेपथु ।
वैवर्ण्यमश्रुप्रलय इत्यष्टौ सात्त्विका स्मृता ॥

करणे तिष्ठन्, भावः—रतिहासादिश्चित्तवृत्तिविशेषः, रसः, स्मृतः आलङ्कारिकैरिति शेषः।-यद्यपि स्तम्भस्वेदादयः सात्त्विका भावा अपि रत्यादिकार्यत्वात्, रसानुभावकत्वाच्च अनुभावान्तर्भूता एवेति न तेभ्यः पृथगुपादानमर्हन्ति, तथापि तेषां सत्त्वमात्रोत्पन्नतया ब्राह्मणवशिष्ठन्यायेनेह पृथगुपादानम्। तदिदं 'विभावानुभावव्यभिचारिभिः परिपुष्टः स्थायी रसः' इति रसलक्षणं निष्पन्नम्। तथाचोक्तं भरतेन 'विभावानुभावव्यभिचारिसंयोगाद् रसनिष्पत्तिः' इति।

भावार्थ—विभाव, अनुभाव, सात्त्विक भाव और व्यभिचारि भावों से उत्कर्ष (परिपोष) को प्राप्त हुआ स्थायीभाव रस कहलाता है ॥२॥

शृङ्गारवीरकरुणाहास्याद्भुतभयानकाः।
रौद्रबीभत्सशान्ताश्च नवैते कथिता बुधैः ॥३॥

अन्वयः—शृङ्गारवीरकरुणाहास्याद्भुतभयानकाः रौद्रबीभत्सशान्ताः च एते, नव (रसाः) बुधैः कथिताः।

पदार्थ—शृङ्गारेति—शृङ्गारश्च, वीरश्च, करुणा च, हास्यं च, अद्भुतश्च, भयानकश्चेति शृङ्गारवीरकरुणाहास्याद्भुतभयानकाः, रौद्रेति—रौद्रश्च, बीभत्सश्च, शान्तश्च रौद्रबीभत्सशान्ताः, एते, नव—नवसंख्याकाः, रसाः, बुधैः—आलङ्कारिकैः, कथिताः—प्रतिपादिताः।

भावार्थ—शृङ्गार, वीर, करुणा, हास्य, अद्भुत, भयानक, रौद्र और बीभत्स—ये नौ रस आलङ्कारिकों ने कहे हैं ॥३॥

अथैतेषां नवानां स्थायिभावान् व्युत्क्रमेणाह—

रतिर्हासश्च शोकश्च क्रोधोत्साहभयं तथा।
जुगुप्साविस्मयशमाः स्थायिभावाः प्रकीर्तिताः ॥४॥

अन्वयः—रतिः, च, हासः, च, शोकः, च, क्रोधोत्साहभयम्, तथा जुगुप्साविस्मयशमाः स्थायिभावाः प्रकीर्तिताः।

पदार्थ—रतिः—स्त्रीपुंसयोरन्योन्यालम्बनः प्रेमाख्यश्चित्तवृत्तिविशेषः, हासः—वागङ्गादिविकारदर्शनजन्मा विकासाख्यपर्याया चित्तवृत्तिः, च पुनः, शोकः—पुत्रादिवियोगजन्मा वैक्लव्याख्या चित्तवृत्तिः, च पुनः, क्रोधश्चोत्साहश्च भयं चैतेषां समाहारः क्रोधोत्साहभयम्, तत्र क्रोधः—गुरुबन्धुवधादि-

महापराधोत्पन्ना प्रज्वलनाभिधा चित्तवृत्ति, उत्साह –परपराक्रमदानादि-स्मरणोद्भूत औन्नत्याख्यश्चित्तधर्म, भयम्–व्याघ्रदर्शनादिसमुद्भूतः परमानर्थविषयको वैक्लव्याख्यश्चित्तधर्म, तथा जुगुप्सा च, विस्मयश्च, शमश्चेति जुगुप्साविस्मयशमा, तत्र जुगुप्सा–कदर्यवस्तुविलोकनोत्पन्ना नासिकासंकोचादिकृत् चित्तवृत्तिविशेष, विस्मय –अलौकिकवस्तुप्रेक्षणो-त्पन्न आश्चर्यापरपर्यायश्चित्तधर्म, शम –निरीहावस्थाया स्वात्मविश्रमजं सुखम्, स्थायिभावा –स्थायिसञ्ज्ञका भावाश्चित्तधर्मा, प्रकीर्तिता –व्यप दिष्टा, आलङ्कारिकैरिति शेष ।

तत्र रति शृङ्गारस्य, हासो हास्यस्य, शोक करुणस्य, क्रोधो रौद्रस्य, उत्साहो वीरस्य, भयं भयानकस्य, जुगुप्सा बीभत्सस्य, विस्मयोऽद्भुतस्य, शम शान्तस्य स्थायी भावो विज्ञेय ।

भावार्थ—रति, हास, शोक, क्रोध, उत्साह, भय, जुगुप्सा, विस्मय और शम स्थायिभाव कहे गए हैं ॥४॥

अथ क्रमेण शृङ्गारादीनां स्वरूपमाह—

**जायापत्योर्मिथो रत्यां वृत्तिः शृङ्गार उच्यते ।**
**संयोगो विप्रलम्भश्चेत्येष तु द्विविधो मतः ॥५॥**

अन्वयः—जायापत्यो· मिथः रत्यां वृत्तिः शृङ्गारः उच्यते, (किं) तु एषः संयोगः विप्रलम्भः च इति द्विविधः मतः ।

पदार्थ —जायापत्यो –दम्पत्यो·, नायकस्य नायिकायाश्च, मिथ –परस्परम्, रत्याम्–प्रेम्णि, वृत्ति –वर्तमानता, शृङ्गारः, उच्यते–व्यपदिश्यते । तु–किन्तु, एष –शृङ्गार, संयोग, विप्रलम्भश्चेति एव रूपेण, द्विविध –द्विप्रकार, मत –स्वीकृत, रसविद्भिरिति शेष ।

भावार्थ—नायक नायिका के एक दूसरे के प्रति प्रेम को शृङ्गार कहते हैं। किन्तु यह शृङ्गार दो प्रकार का होता है—एक संयोग शृङ्गार और दूसरा विप्रलम्भ शृङ्गार ॥५॥

**तौ तयोर्भवतो वाच्यौ युक्तैर्युक्तवियुक्तयोः ।**
**प्रच्छन्नश्च प्रकाशश्च पुनरेष द्विधा मतः ॥६॥**

**अन्वयः—तौ युक्तवियुक्तयोः तयोः बुधैः वाच्यौ भवतः, एषः पुनः प्रच्छन्नः च प्रकाशः च (इति) द्विधा मतः ।**

पदार्थ —तौ–संयोगविप्रलम्भौ, युक्तवियुक्तयोः–युक्तयोः संयोगिनोः, वियुक्तयोर्वियोगिनोः, तयोः–जायापत्योः, क्रमेण, बुधैः–कविभिः, वाच्यौ–वर्णनीयौ, भवतः । अयं भावः—कविभिः संयोगिनां संयोगशृङ्गारो वर्ण्यते, वियोगिनां च विप्रलम्भशृङ्गारो वर्ण्यते । अथवा–बुधैः–आलङ्कारिकैः, वाच्यौ–व्यपदेश्यौ भवतः–इति व्याख्येयम् । अस्यायमभिप्रायः—संयोगिनां शृङ्गार आलङ्कारिकैः संयोग इति व्यपदिश्यते, वियोगिनां च विप्रलम्भ इति व्यपदिश्यते । एष शृङ्गारः, पुनः–भूयोऽपि, प्रच्छन्नः प्रकाशश्चेत्येव प्रकारेण, द्विधा–द्विप्रकारः, मतः–अभ्युपगतः ।

भावार्थ—कवि लोग संयुक्त दम्पति में संयोग शृङ्गार का और वियुक्त दम्पति में विप्रलम्भ शृङ्गार का वर्णन करते हैं । इस शृङ्गार के प्रच्छन्न-शृङ्गार और प्रकाशशृङ्गार ये और भी दो भेद माने गए हैं ॥६॥

**अथ शृङ्गारस्य नायकं तद्भेदांश्च क्रमशो वर्णयति—**

**रूपसौभाग्यसंपन्नः कुलीनः कुशलो युवा ।**
**अनुद्धतः सूनृतगीः ख्यातो नेताऽत्र सद्गुणः ॥७॥**

**अन्वयः—अत्र रूपसौभाग्यसंपन्नः, कुलीनः, कुशलः, अनुद्धतः, सूनृतगीः, सद्गुणः, युवा नेता ख्यातः ।**

पदार्थ —अत्र–शृङ्गारे, रूपसौभाग्यसंपन्नः–रूपेण सौन्दर्येण, सौभाग्येन–लक्ष्म्या च, सम्पन्नः–युक्तः, कुलीनः–सत्कुलजः, कुशलः–चतुरः, अनुद्धतः–उद्धततारहितः, सूनृतगीः–सूनृता सत्या प्रिया च, गीर्वाग् यस्य तादृशः, सद्गुणः–औदार्यादिश्रेष्ठगुणयुक्तः, युवा–यौवनसम्पन्नः नेता–नायकः, ख्यातः–प्रकाशितः ।

भावार्थ—रूपवान्, लक्ष्मीवान्, कुलीन, चतुर, अनुद्धत, सत्य और प्रिय बोलने वाला, उदारता आदि श्रेष्ठ गुणों से युक्त युवा पुरुष शृङ्गार रस में नायक कहा गया है ॥७॥

**अयं च विधुरश्वोऽनुकूलो दक्षिणः शठः ।**
**धृष्टश्चेति चतुर्धा स्यान्नायिका स्याच्चतुर्विधा ॥८॥**

महापराधोत्पन्ना प्रज्वलनाभिधा चित्तवृत्तिः, उत्साहः–परपराक्रमदानादि-स्मरणोद्भूत औन्नत्याख्यश्चित्तधर्मः, भयम्–व्याघ्रदर्शनादिसमुद्भूत परमानर्थविषयको वैक्लव्याख्यश्चित्तधर्मः, तथा जुगुप्सा च, विस्मयश्च, शमश्चेति जुगुप्साविस्मयशमाः, तत्र जुगुप्सा–कदर्यवस्तुविलोकनोत्पन्ना नासिकासंकोचादिकृत् चित्तवृत्तिविशेषः, विस्मयः–अलौकिकवस्तुप्रेक्षणोत्पन्न आश्चर्यापरपर्यायश्चित्तधर्मः, शमः–निरीहावस्थायां स्वात्मविश्रमज सुखम्, स्थायिभावाः–स्थायिसंज्ञका भावाश्चित्तधर्माः, प्रकीर्तिताः–व्यपदिष्टाः, आलङ्कारिकैरिति शेषः ।

तत्र रतिः शृङ्गारस्य, हासो हास्यस्य, शोकः करुणस्य, क्रोधो रौद्रस्य, उत्साहो वीरस्य, भयं भयानकस्य, जुगुप्सा बीभत्सस्य, विस्मयोऽद्भुतस्य, शमः शान्तस्य स्थायी भावो विज्ञेयः ।

भावार्थ—रति, हास, शोक, क्रोध, उत्साह, भय, जुगुप्सा, विस्मय और शम स्थायिभाव कहे गए हैं ॥४॥

अथ क्रमेण शृङ्गारादीनां स्वरूपमाह—

जायापत्योर्मिथो रत्यां वृत्तिः शृङ्गार उच्यते ।
संयोगो विप्रलम्भश्चेत्येष तु द्विविधो मतः ॥५॥

अन्वयः—जायापत्योः मिथः रत्यां वृत्तिः शृङ्गारः उच्यते, (किं) तु एषः संयोगः विप्रलम्भः च इति द्विविधः मतः ।

पदार्थः—जायापत्योः–दम्पत्योः, नायकस्य नायिकायाश्च, मिथः–परस्परम्, रत्याम्–प्रेम्णि, वृत्तिः–वर्तमानता, शृङ्गारः, उच्यते–व्यपदिश्यते । तु–किन्तु, एषः–शृङ्गारः, संयोगः, विप्रलम्भश्चेति एव रूपेण, द्विविधः–द्विप्रकारः, मतः–स्वीकृतः, रसविद्भिरिति शेषः ।

भावार्थ—नायक नायिका के एक दूसरे के प्रति प्रेम को शृङ्गार कहते हैं। किन्तु यह शृङ्गार दो प्रकार का होता है—एक संयोग शृङ्गार और दूसरा विप्रलम्भ शृङ्गार ॥५॥

तौ तयोर्भेदतो वाच्यौ युक्तैर्युक्तवियुक्तयोः ।
प्रच्छन्नश्च प्रकाशश्च पुनरेष द्विधा मतः ॥६॥

अन्वयः—तौ युक्तवियुक्तयोः तयोः बुधैः वाच्यौ भवतः, एषः पुनः प्रच्छन्नः च प्रकाशः च ( इति ) द्विधा मतः ।

पदार्थः—तौ–संयोगविप्रलम्भौ, युक्तवियुक्तयोः–युक्तयोः संयोगिनोः, वियुक्तयोर्वियोगिनोः, तयोः–जायापत्योः, क्रमेण, बुधैः–कविभिः, वाच्यौ–वर्णनीयौ, भवतः । अयं भावः—कविभिः संयोगिनां संयोगशृङ्गारो वर्ण्यते, वियोगिना च विप्रलम्भशृङ्गारो वर्ण्यते । अथवा–बुधैः–आलङ्कारिकैः, वाच्यौ–व्यपदेश्यौ भवतः–इति व्याख्येयम् । अस्यायमभिप्रायः—संयोगिनां शृङ्गार आलङ्कारिकैः संयोग इति व्यपदिश्यते, वियोगिनां च विप्रलम्भ इति व्यपदिश्यते । एषः शृङ्गारः, पुनः–भूयोऽपि, प्रच्छन्नः प्रकाशश्चेत्येवं प्रकारेण, द्विधा–द्विप्रकारः, मतः–अभ्युपगतः ।

भावार्थ—कवि लोग संयुक्त दम्पति में संयोग शृङ्गार का और वियुक्त दम्पति में विप्रलम्भ शृङ्गार का वर्णन करते हैं । इस शृङ्गार के [illegible] शृङ्गार और प्रकाशशृङ्गार ये और भी दो भेद माने गए हैं ॥

अथ शृङ्गारस्य नायकं तद्भेदांश्च क्रमशो वर्णयति—

रूपसौभाग्यसंपन्नः कुलीनः कुशलो युवा ।
अनुद्धतः सूनृतवाक् ख्यातो नेताऽत्र सद्गुणः ॥

अन्वयः—अत्र रूपसौभाग्यसंपन्नः, कुलीनः, [illegible] अनुद्धतः, सूनृतवाक्, सद्गुणः, युवा नेता ख्यातः ।

पदार्थः—अत्र–शृङ्गारे, रूपसौभाग्यसंपन्नः–रूपेण सौन्दर्येण, [illegible]–सम्पदा च, सम्पन्नः–युक्तः, कुलीनः–सत्कुलजः, कुशलः–[illegible] अनुद्धतः–उद्धतभावरहितः, सूनृतवाक्–सूनृता सत्या प्रिया च, वाक् [illegible], सद्गुणः–औदार्यादिश्रेष्ठगुणयुक्तः, युवा–यौवनसम्पन्नः, नेता–नायकः, ख्यातः–प्रकथितः ।

भावार्थ—रूपवान्, सम्पत्तिवान्, कुलीन, चतुर, अनुद्धत, सत्य और प्रिय बोलने वाला, उदारता आदि श्रेष्ठ गुणों से युक्त युवा पुरुष शृङ्गार रस में नायक कहा गया है ॥७॥

अयं च त्रिविधः अनुकूलो दक्षिणः शठः ।
धृष्टश्चेति चतुर्धा स्यान्नायिका स्याच्चतुर्विधा ॥८॥

अन्वयः—च विबुधैः अयम् अनुकूलः दक्षिणः शठः धृष्टः च इति चतुर्धा उक्तः स्यात्, नायिका च चतुर्विधा स्यात्।

पदार्थ —किंच, विबुधैः—पण्डितैः, अयम्—शृङ्गाररसनायकः, अनुकूलः, दक्षिणः, शठः, धृष्टश्च इत्येवं प्रकारेण चतुर्धा—चतुर्विधः इति यावत्, उक्तः—प्रतिपादितः, स्यात्। नायिका च—नायिकापि, चतुर्विधा—चतुष्प्रकारा, स्यात्।

भावार्थ—विद्वानों ने नायक के चार भेद बताए हैं—अनुकूल, दक्षिण, शठ और धृष्ट। नायिका भी चार प्रकार की होती है ॥८॥

नीलीरागोऽनुकूलः स्यादनन्यरमणीरतः।
दक्षिणश्चान्यचित्तोऽपि यः स्यादविकृतः स्त्रियाम् ॥९॥

अन्वयः—नीलीरागः (अत एव) अनन्यरमणीरतः अनुकूलः स्यात्, च यः अन्यचित्तः अपि स्त्रियाम् अविकृतः स्यात् (सः) दक्षिणः (स्यात्)।

पदार्थ —नीलीरागः—नील्या रागः इव रागो यस्य सः नीलीरागः यथा नीलीरागः एकदा वस्त्रमारूढो न पुनस्तत उत्तरति, तथैव दृढो भवति, तथैव यो दृढानुरागः, अत एव—अनन्यरमणीरतः—न अन्यस्यां रमण्यां स्त्रियाम्, रतः—अनुरक्तः, अनुकूलः—अनुकूलाख्यो नायकः, स्यात्। किंच, यः, अन्यचित्तः—अन्यस्यां चित्तं यस्य तादृशः—अन्यरमणीरतः, अपि, स्त्रियाम्—स्वस्त्रियाम्, अविकृतः—क्रोधादिविकाररहितः, स्यात्, सः, उभयानुरञ्जनदक्षतया दक्षिणाख्यो नायकः, स्यात्।

भावार्थ—जिसका प्रेम नीलीराग के सदृश दृढ हो और दूसरी स्त्री से प्रेम न करता हो, वह अनुकूल नायक है। और जो अन्य स्त्री में अनुरक्त होने पर भी अपनी स्त्री से विगाड़ नहीं करता—उसे भी प्रसन्न रखता है, वह दक्षिण नायक है ॥९॥

प्रियं वक्त्यप्रियं तस्याः कुर्वन् योऽविकृतः शठः।
धृष्टो ज्ञातापराधोऽपि न विलक्षोऽवमानितः ॥१०॥

अन्वयः—यः अविकृतः (अत एव) तस्याः अप्रियं कुर्वन् (अपि) प्रियं वक्ति (सः) शठः (उच्यते) (च) ज्ञातापराधः (अत एव) अवमानितः अपि विलक्षः न (भवति) (सः) धृष्टः (उच्यते)।

पदार्थः—यः, अविकृतः—बहिः क्रोधादिविकाररहितः, अत एव, याः—नायिकायाः, अप्रियं कुर्वन्नपि—गूढम् अन्यरमणीरमणेन अप्रीतिपादयन्नपि, मिथ्यानुरागप्रदर्शनार्थं प्रियम्—स्निग्धम्, वक्ति—भाषते, , शठ—शठाख्यो नायकः अस्ति। यः, ज्ञातापराधः—ज्ञातः, अपराधः न्यरमणीरमणरूपः, यस्य तादृशः, अत एव, नायिकया, अवमानितः—दप्रहारादिना तिरस्कृतोऽपि, विलक्ष—लज्जितः, न भवति, सः, धृष्टः—ष्टनायकः, उच्यते।

भावार्थ—जो बाहर से क्रोधादि विकार रहित हो, और अप्रिय कार्य रते हुए भी नायिका से प्रिय वाणी बोलता हो वह शठ नायक है। जो पराध प्रकट होने पर भी और तिरस्कृत होने पर भी लज्जित नहीं होता, ह धृष्ट (ढीठ) नायक है ॥१०॥

दानीं नायिकाभेदान् वर्णयति—

अनूढा च स्वकीया च परकीया पणाङ्गना।
त्रिवर्गिणः स्वकीया स्यादन्याः केवलकामिनः ॥११॥

अन्वयः—किं (च) अनूढा, स्वकीया, परकीया, च पणाङ्गना (इति इमाः चतस्रो नायिकाः भवन्ति)। (आसु) त्रिवर्गिणः स्वकीया स्यात्, केवलकामिनः अन्याः (स्युः)।

पदार्थः—किं च, अनूढा—अपरिणीता, स्वकीया—स्वपरिणीता, परकीया—पुरुषेण परिणीता, पणाङ्गना—वेश्या, इतीमाश्चतस्रो नायिका भवन्ति। सु, त्रिवर्गिणः—त्रिवर्गो धर्मार्थकामाः, सोऽस्यास्तीति त्रिवर्गी, तस्य र्मार्थकामकामस्य नायकस्य स्वकीया—स्वपरिणीतैव, नायिका स्यात्। केवलकामिनः—केवलं काममात्रपरायणस्य तु, अन्याः—अनूढादयः, स्युः—भवेयुः।

भावार्थ—अनूढा (अविवाहिता) स्वकीया, परकीया और वेश्या—ये र प्रकार की नायिकाएं होती हैं। इनमें धर्म, अर्थ और काम की अभिलाषा ने वाले नायक की स्वकीया अपनी विवाहिता पत्नी ही नायिका हो सकती और केवल कामुक नायक की अनूढा आदि तीनों हो सकती हैं ॥११॥

अ क्रमशो नायिका लक्षयति—

अनुरक्तानुरक्तेन स्वयं या स्वीकृता भवेत्।
सानूढेति यथा राज्ञो दुष्यन्तस्य शकुन्तला ॥१२॥

**अन्वयः—या अनुरक्ता [सती] अनुरक्तेन [नायकेन] स्व स्वीकृता भवेत्, सा अनूढा। यथा दुष्यन्तस्य राज्ञः शकुन्तला**

पदार्थ—या-नायिका, अनुरक्ता-अनुरागवती सती, अनुरक्तेन-अनुरागव नायकेन, स्वयम्-गान्धर्वादिविधिना, स्वीकृता, भवेत्, सा अनूढा-अनूढ ख्या नायिका, उच्यते-इति। यथेत्युदाहरति-दुष्यन्तस्य, राज्ञ, शकुन्तल सा हि कण्वमुनेराश्रमे नायके दुष्यन्ते अनुरक्ता, अनुरक्तेन तेन स्वय गान्ध विधिना स्वीकृताऽभवत्। दर्पणकारस्तु-स्वकीया, परकीया, वेश्येति त्रिवि नायिकामुक्त्वा, अनूढा परकीयाभेद प्रत्यपादत्। कथमप्यजातोपयमामे चानूढा वर्णयति स्म। तदुक्त दर्पणे—

> अथ नायिका त्रिभेदा स्वान्या साधारणी स्त्रीति।
> परकीया द्विधा प्रोक्ता परोढा कन्यका तथा।
> कन्या त्वजातोपयमा सलज्जा नवयौवना॥

भावार्थ—अपने में अनुरक्त जिस नायिका से अनुरागयुक्त नाय अपने आप (पिता आदि के दान के बिना ही गान्धर्वादि विधि से) स्वीका कर ले उस नायिका को अनूढा कहते हैं। जैसे शकुन्तला दुष्यन्त राजा की अनूढा नायिका थी॥१२॥

**देवताग्रुरुसाक्ष्येण स्वीकृता स्वीयनायिका।**
**क्षमावत्यतिगम्भीरप्रकृतिः सच्चरित्रभृत्॥१३॥**

**अन्वय—[या] क्षमावती अतिगम्भीरप्रकृतिः सच्चरित्र भृत् देवतागुरुसाक्ष्येण स्वीकृता [भवति] [सा] स्वीय नायिका [उच्यते]।**

पदार्थ—या नायिका, क्षमावती-क्षमायुक्ता, अतिगम्भीरा-विषम मपि हार्दं विकारमाकृत्यादिना अप्रकटयन्ती-प्रकृतिः स्वभावो यस्यास्तादृ सच्चरित्रभृत्-सच्चरित्र पतिव्रतोचितमाचार बिभर्ति धारयतीति तथाभू देवतागुरुसाक्ष्येण-देवताया अग्रे, गुरौ पित्रादेश्च, साक्ष्येण-समक्षसन्निध्ये न, स्वीकृता-अङ्गीकृता, भवति, सा, स्वीयनायिका-स्वीया स्वकीया नायिका, उच्यत इति शेष।

भावार्थ—जो क्षमायुक्त हो, अत्यन्त गम्भीर प्रकृति वाली हो,

आचारयुक्त हो तथा अग्नि और पिता आदि गुरुजनों को साक्षी करके (ब्राह्म-विवाह की विधि से) जिसको (नायक ने) स्वीकार किया हो, वह स्वकीया नायिका कहलाती है ॥१३॥

**परकीयाप्यनूढेव वाच्यभेदोऽस्ति चानयोः ।**
**स्वयमप्यतिकामैका सख्यैवैका प्रियं वदेत् ॥१४॥**

**अन्वयः—परकीया अपि अनूढा इव (भवति) च अनयोः वाच्यभेदः अस्ति, एका अतिकामा (सती) स्वयम् अपि प्रियं वदेत्, एका सख्या एव ( प्रियं वदेत् ) ।**

पदार्थः—परकीया-परकीयाख्या नायिकापि अनूढेव-अनूढासदृशी भवति । अनुरक्तायाः अनुरक्तेन स्वीकरणमेव तस्या अनूढासादृश्यं बोध्यम् । भेदयोरेव सादृश्यं घटत इत्यतस्तयोर्भेदम् आह—वाच्येति, चशब्दस्त्वर्थे, किन्तु अनयोः परकीयानूढाशब्दयोः वाच्यभेदः—वाच्ययोः अर्थयोः भेदः—अन्तरमस्ति, एका—परकीया, अतिकामा—कामपरतन्त्रा, सती स्वयम् कुलशीलितां लज्जामेकतः कृत्वा आत्मनैव, प्रियम्-कान्तम्, वदेत्—स्वाभिप्रायं निवेदयेत् । एका—अपरा अनूढाख्या नायिका तु, लज्जापरवशा, सख्या—स्वसखीद्वारैव, प्रियं प्रति स्वाभिप्रायं प्रकाशयेत् ।

भावार्थ—परकीया नायिका भी अनूढा की तरह ही है, किन्तु दोनों में अन्तर (अवश्य) है । परकीया तो काम के वशीभूत होकर प्रिय के प्रति अपना अभिप्राय स्वयं प्रकट करती है और अनूढा [लज्जावश] अपनी सखी के द्वारा अपना अभिप्राय बताती है ॥१४॥

**सामान्यवनिता वेश्या भवेत् कपटपण्डिता ।**
**न हि कश्चित् प्रियस्तस्या दातारं नायकं विना ॥१५॥**

**अन्वयः—कपटपण्डिता सामान्यवनिता वेश्या भवेत्, तस्याः दातारं नायकं विना कश्चित् प्रियः न हि (अस्ति) ।**

पदार्थः—कपटपण्डिता—कपटे परवञ्चनायाम्, पण्डिता कुशला, सामान्यवनिता—सर्वेषां साधारणी स्त्री, वेश्या—वेश्याख्या नायिका भवेत्, तस्याः—वेश्यायाः, दातारम्—धनप्रदातारम्, नायकं विना, कश्चित् प्रियः, न ह्यस्ति—न विद्यते इति निश्चितम्, सा हि धनापेक्षिणी नानुरागिण्यपि

निर्धनेऽनुरज्यति, सधनेऽपि आपाततः एव तस्यानुरागो धनदोहनार्थम् ।

भावार्थ—छलछिद्र में निपुण साधारण—बाजारू—स्त्री—वेश्या है, धन देने वाले नायक को छोड़ कर उसका कोई भी प्रिय नहीं होता ॥१५॥

**सर्वप्रकाशमेवैषा याति नायकमुद्धता ।**
**वाच्यः प्रच्छन्न एवान्यस्त्रीणां प्रियसमागमः ॥१६॥**

अन्वयः—एषा उद्धता (सती) सर्वप्रकाशम् नायकं याति, अन्यस्त्रीणां प्रियसमागमः प्रच्छन्न एव वाच्यः ।

पदार्थ—एषा-वेश्या, उद्धता-उच्छृङ्खला, सती, सर्वप्रकाशम्-सर्वेषं समक्षम्, नायकम्, याति-अभिसरति, अन्यस्त्रीणाम्-अन्यासामनूढादीनां तिसृणां नायिकानाम्, प्रियसमागमः-प्रियेण कान्तेन, समागमः संगमनम्, प्रच्छन्न एव, सर्वजनपरोक्ष एव, वाच्य-वर्णनीय, कविनेति शेष । प्रच्छन्न प्रकाशश्चेति शृङ्गारस्य द्वौ भेदौ पुरस्तात् प्रतिपादितौ। तत्रानूढादीनां प्रच्छन्न शृङ्गार, वेश्यायास्तु [illegible] प्रकारो भवतीत्यै कारिकाया हृदयम् ।

भावार्थ—यह वेश्या नायिका उद्धत होकर सब के सामने नायक पास जाती है । अन्य (अनूढा आदि तीनों) नायिकाओं का प्रि[illegible] अप्रकट रूप से वर्णन करना चाहिए ॥१६॥

**अथ संयोगं वर्णयित्वा विप्रलम्भं वर्णयितुमुपक्रमते—**

**पूर्वानुरागमानात्मप्रवासकरुणात्मकः ।**
**विप्रलम्भश्चतुर्धा स्यात् पूर्वपूर्वो ह्ययं गुरुः ॥**

अन्वयः—विप्रलम्भः पूर्वानुरागमानात्मप्रवास (सन्) चतुर्धा स्यात्, अयं हि पूर्वपूर्वः गुरुः (भव

पदार्थ—विप्रलम्भ-विप्रलम्भशृङ्गार, पूर्वानुरागक करुणात्मक—पूर्वानुरागश्च मानश्च पूर्वानुरागमानौ, तावात्मानौ पूर्वानुरागमानात्मा, प्रवासश्च करुणश्च प्रवासकरुणौ, तावात्मा प्रवासकरुणात्मक, पूर्वानुरागमानात्मा चासौ प्रवासकरुणात्मकश्चेति मानात्मप्रवासकरुणात्मक, द्वन्द्वगर्भ कर्मधारय । 'द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसंबध्यते' इत्यभियुक्तोक्त्या आत्मपद

पूर्वानुरागात्मकः, मानात्मकः, प्रवासात्मकः, करुणात्मकः सन्, चतुर्धा–चतुर्विधः स्यात्। अयम् चतुर्विधो विप्रलम्भः, पूर्वपूर्वः–करुणापेक्षया प्रवासः, तदपेक्षया मानः, तदपेक्षयापि पूर्वानुरागः, गुरुः–श्रेष्ठः। हि शब्दो वाक्यालङ्कारे, निश्चयार्थो वा।

भावार्थ—पूर्वानुराग, मान, प्रवास और करुण—ये विप्रलम्भ के चार भेद हैं। इन में पूर्वपूर्व श्रेष्ठ है अर्थात् करुण की अपेक्षा प्रवास, प्रवास की अपेक्षा मान और मान की अपेक्षा भी पूर्वानुराग श्रेष्ठ है ॥१७॥

अथ पूर्वानुरागं लक्षयति—

स्त्रीपुंसयोर्नवालोकादेवोल्लसितरागयोः।
ज्ञेयः पूर्वानुरागोऽयमपूर्णस्पृहयोर्दशा ॥१८॥

अन्वयः—नवालोकाद् एव उल्लसितरागयोः अपूर्णस्पृहयोः दशा अयं पूर्वानुरागः ज्ञेयः।

पदार्थः—नवालोकात्–नव इदंप्रथमतया जातः, य आलोकः अन्योऽन्यदर्शनम्, तस्मादेव, अप्यर्थ एवकारः श्रवणमपि समुच्चिनोति, तथाच नवादालोकाद् श्रवणाच, उल्लसितरागयोः–उल्लसितः अङ्कुरितः रागः प्रेम ययोः, अपूर्णस्पृहयोः–अपूर्णा, स्पृहा समागमाभिलाषः, ययोस्तादृशयोः स्त्रीपुंसयोः–स्त्री च पुमांश्च स्त्रीपुंसौ, अचतुरेत्यादिनाजन्तो निपात्यते। तयोः स्त्रीपुरुषयोः, दशा–अवस्था, अयम्–अनुपदमेवोद्दिष्टः, पूर्वरागः, ज्ञेयः–ज्ञातव्यः। तदुक्तं दर्पणे—

श्रवणाद् दर्शनाद् वापि मिथः संरूढरागयोः।
दशाविशेषो योऽप्राप्तौ पूर्वरागः स उच्यते ॥

भावार्थ—पहले-पहल दर्शन से जिनके हृदय में (एक दूसरे के प्रति) प्रेम अङ्कुरित हो गया है, और जिनकी समागम की इच्छा पूर्ण नहीं हुई है, ऐसे स्त्रीपुरुषों की दशा को 'पूर्वानुराग' समझना चाहिये ॥१८॥

अथ मानप्रवासौ लक्षयति—

मानोऽन्यवनितासङ्गादीर्ष्याविकृतिरुच्यते।
प्रवासः परदेशस्थे प्रिये विरहसंभवः ॥१९॥

अन्वयः—अन्यवनितासङ्गाद् ईर्ष्याविकृतिः, मानः उच्यते, प्रिये परदेशस्थे (सति) विरहसंभवः प्रवासः (उच्यते)।

पदार्थ —अन्यवनितासङ्गाद्–अन्यस्याम्, वनितायाम् स्त्रियाम्, आसङ्गाद्–आसक्तेः, नायकस्येति शेष, ईर्ष्याविकृति –ईर्ष्या अक्षमा तद्रूपा, विकृतिर्विकार, मान, उच्यते–व्यपदिश्यते । प्रिये–कान्ते, परदेशस्थे प्रोषिते, सति, य विरहसभव –विरहस्य वियोगस्य संभव, स, प्रवास–प्रवासविप्रलम्भ उच्यते ।

भावार्थ—पति की अन्य स्त्री में आसक्ति से स्त्री के हृदय में जो डाह पैदा होती है उसे 'मान' कहते हैं। पति के परदेश में रहने के कारण जो वियोग होता है, उसे 'प्रवास' कहते हैं ॥१६॥

इदानीं करुणविप्रलम्भं लक्षयति—

स्यादेकतरपञ्चत्वे दम्पत्योरनुरक्तयोः।
शृङ्गारः करुणाख्योऽयं वृत्तवर्णन एव सः ॥२०॥

अन्वय.—अनुरक्तयोः दम्पत्योः एकतरपञ्चत्वे अयं करुणाख्यः शृङ्गारः, सः वृत्तवर्णने एव ।

पदार्थ —अनुरक्तयो –परस्परमनुरागिणो, दम्पत्यो.–जायापत्यो, एकतरपञ्चत्वे–एकतरस्य नायकस्य नायिकाया वा, पञ्चत्वे–निधने सति, अय, करुणाख्य शृङ्गार –करुणविप्रलम्भ, व्यपदिश्यते, स –करुणविप्रलम्भः, वृत्तवर्णने–वृत्तवर्णनपरे प्रबन्धे, एव भवति, इद तु बोध्यम्, मृतस्य नायकस्य नायिकाया वा पुनर्जीवनाशायामेव करुणविप्रलम्भो भवति, अन्यथा तु करुण एव रस । अनालम्बनाया रते शृङ्गारत्वायोगात् शोकोत्कर्षेकतया गुणीभावाच्च । तदुक्तं दर्पणे—

यूनोरेकतरस्मिन् गतवति लोकान्तरं पुनर्लभ्ये ।
विमनायते यदैकस्तदा भवेत् करुणविप्रलम्भ ॥

भावार्थ—यदि परस्पर अनुरक्त नायक नायिका में से एक का देहान्त हो जाय (और उसके पुनर्जीवन की आशा हो) तब करुणविप्रलम्भ होता है। यह शृङ्गार प्राय प्रबन्ध में ही हुआ करता है ॥२०॥

शृङ्गारं वर्णयित्वा क्रमप्राप्तं वीरं वर्णयति—

**उत्साहात्मा भवेद् वीरस्त्रिधा धर्माजिदानतः ।**
**नायकोऽत्र भवेत् सर्वैः श्लाघ्यैरधिगतो गुणैः ॥२१॥**

**अन्वयः**—उत्साहात्मा वीरः धर्माजिदानतः त्रिधा भवेत् । अत्र सर्वैः श्लाघ्यैः गुणैः अधिगतः नायकः भवेत् ।

पदार्थ—उत्साहात्मा—उत्साह, आत्मा स्थायिभाव, यस्यैतादृश, वीर—वीराख्यो रस, धर्माजिदानत—धर्मश्च, आजिश्च युद्ध च, दान च, तेभ्यो धर्माजिदानत धर्मत, आजित, दानत इत्यर्थ, त्रिधा-त्रिप्रकार, भवेत् । धर्मवीर, युद्धवीर, दानवीर इत्येव त्रिविधो वीरो भवतीति यावत् । अत्र वीरे रसे, सर्वै, श्लाघ्यै—प्रशस्यै, गुणै—धीरत्वादिभि, अधिगत—प्राप्त, युक्त इत्यर्थ, नायक, भवेत् । अधिकृतो गुणैरिति पाठे तु अधिकृत—यधिक उत्कृष्ट इति यावत्, इति व्याख्येयम् । अधिकृत शब्दे आद्यादित्वात् सार्वविभक्तिकस्तसि ।

भावार्थ—जिसका स्थायीभाव उत्साह हो वह वीर रस होता है । इस के तीन भेद होते हैं—धर्मवीर, युद्धवीर और दानवीर । इस रस में सब धैर्यादि प्रशंसनीय गुणों से युक्त उत्कृष्ट (उत्तमप्रकृति) नायक होता है ॥२१॥

अथ करुणं लक्षयति—

**शोकोत्थः करुणो ज्ञेयस्तत्र भूपातरोदने ।**
**वैवर्ण्यमोहनिर्वेदप्रलापाश्रूणि कीर्तयेत् ॥२२॥**

**अन्वयः**—शोकोत्थ ( रसः ) करुण ज्ञेय, तत्र भूपात-रोदने वैवर्ण्यमोहनिर्वेदप्रलापाश्रूणि कीर्तयेत् ।

पदार्थ—शोकोत्थ—शोकादुत्तिष्ठतीति शोकोत्थ—शोकोत्पन्न, शोक स्थायिभावक रस, करुण—करुणाख्यो रस, ज्ञेय—ज्ञातव्यः । तत्र करुणे रसे, भूपातरोदने-भूपातो भूपतन रोदन क्रन्दन च, वैवर्ण्य मोहनिर्वेदप्रलापाश्रूणि—वैवर्ण्यम्—आकृतेर्विच्छायताम्, मोहम्—मूर्छाम्, निर्वेदम्—वैराग्यम्, प्रलापम्—असम्बद्धभाषणम्, अश्रूणि, च कीर्तयेत्—वर्णयेत्, कविरिति शेष ।

भावार्थ—शोक से उत्पन्न होने वाले रस को करुण रस कहते हैं । इस

है। मध्यम पुरुषों की हंसी में मुंह भी खुल जाता है-दांत दीखने लगते हैं। अधमों की हंसी शब्द सहित होती है उसमें खूब कहकहा मच जाता है ॥२४॥

अथाद्भुतं वर्णयति—

विस्मयात्माद्भुतो ज्ञेयः स चासंभाव्यवस्तुनः।
दर्शनाच्छ्रवणाद् वापि प्राणिनामुपजायते ॥२५॥

अन्वयः—विस्मयात्मा अद्भुतः ज्ञेयः, च सः प्राणिनाम् असंभाव्यवस्तुनः दर्शनात् अपि वा श्रवणाद् उपजायते।

पदार्थ—विस्मयात्मा विस्मय आश्चर्यम्, आत्मा स्वरूपं स्थायिभाव इति यावत् यस्य स रस, अद्भुत –अद्भुताख्य, ज्ञेय। किं च, सः अद्भुतः रस, प्राणिनाम्–सहृदयसामाजिकानाम्, असंभाव्यवस्तुन –असंभाव्यस्य असंभविन, वस्तुनः–पदार्थस्य, दर्शनात्–साक्षात्करणात, अपि वा श्रवणात्–श्रवणेन्द्रियजन्यज्ञानात्, उपजायते–उत्पद्यते।

भावार्थ—जिसका स्थायिभाव विस्मय हो उसे अद्भुत रस समझना चाहिए। किसी असम्भव वस्तु के देखने या सुनने से सहृदय सामाजिकों के हृदयों में अद्भुत रस की उत्पत्ति होती है ॥२५॥

अथाद्भुतस्य विभावादीन्दर्शयति—

तत्र नेत्रविकासः स्यात् पुलकः स्वेद एव च।
निःस्पन्दनेत्रता साधुसाधुवाग् गद्गदा च गीः ॥२६॥

अन्वयः—तत्र नेत्रविकासः स्यात् पुलकः स्वेदः एव च निःस्पन्दनेत्रता साधुसाधुवाग् स्यात्, च गीः गद्गदा [स्यात्]।

पदार्थ—तत्र–अद्भुते रसे, नेत्रविकास –नेत्रयो नयनयो विकास स्फारता, पुलक–रोमोद्गम, स्वेद, एव च–एव शब्दोऽप्यर्थे, अपि च, निःस्पन्दनेत्रता–निःस्पन्दे निश्चले, नेत्रे यस्य स, तस्य भावस्तत्ता, साधुसाधुवाग्–साधु साधु इति शब्दोच्चारणम्, स्यात्–भवेत्। च–पुनः, गीः–वाणी, गद्गदा–स्खलन्ती, गद्गद वाक्स्खलने कण्ठ्वादिः। स्यात्। इमे नेत्रविकासादयोऽद्भुतस्यानुभावा इति भावः।

भावार्थ—अद्भुत रस में नेत्रों का विकास, रोमाञ्च, पसीना, नेत्रों की स्थिरता, साधु साधु ( वाह वाह, खूब खूब ) शब्द उच्चारण, वाणी का रुक रुक कर निकलना ( आदि ) होते हैं ॥२६॥

भयानकं लक्षयति—

**भयानको भवेद् भीतिप्रकृतिर्घोरवस्तुनः ।**
**स च प्रायेण वनितानीचबालेषु शस्यते ॥२७॥**

**अन्वयः—भीतिप्रकृतिः भयानकः भवेत्, च सः घोरवस्तुनः ( भवेत् ) प्रायेण वनितानीचबालेषु शस्यते ।**

पदार्थ—भीतिप्रकृतिः-भीतिर्भयम्, प्रकृतिर्मूलं स्थायिभावो यस्य सः, भयानकः-भयानकाख्यो रसः, भवेत् । किं च सः, घोरवस्तुनः-घोराद् भयजनकाद् व्याघ्रादितः, वस्तुनः, भवेत्-उत्पद्येत, घोरं वस्तु तस्यालम्बनमित्यर्थः । प्रायेण-आधिक्येन वनितानीचबालेषु-वनितायां नीचे बाले च शस्यते-प्रशस्यते । उत्तमप्रकृतौ भयानको न वर्णनीयः, किन्तु वनितादिष्वेव ।

भावार्थ—जिसका स्थायीभाव भय हो, उसे भयानक रस कहते हैं । भयङ्कर वस्तु ( व्याघ्र आदि ) से इसकी उत्पत्ति होती है । अधिकतर यह रस स्त्री, नीच और बालकों में ही अच्छा लगता है अर्थात् स्त्री आदि में ही भयानक रस का वर्णन करना चाहिए ॥२७॥

अथ भयानकस्यानुभावानाह—

भावार्थ—इस भयानक रस में पण्डित लोग इधर उधर झांकना, मुँह सूख जाना, आवाज रुक जाना, हाथ पांव आदि का कांपना, जल्दी, उद्वेग, चेहरे की मुर्झाहट, मोह (आदि) अनुभावों का वर्णन करते हैं ॥२८॥

अथ रौद्रं वर्णयति—

क्रोधात्मको भवेद् रौद्रः क्रोधश्चारिपराभवात्।
भीष्मवृत्तिर्भवेदुग्रः सामर्षस्तत्र नायकः ॥२९॥

अन्वयः—क्रोधात्मकः रौद्रः भवेत्, च क्रोधः अरिपराभवात् (भवति)। तत्र भीष्मवृत्तिः, उग्रः, सामर्षः नायकः (नरः) भवेत्।

पदार्थः—क्रोधात्मकः-क्रोध आत्मा स्थायी यस्य स क्रोधस्थायिभावको रस, रौद्र-रौद्राख्य, भवेत्, किं च स क्रोधः, अरिपराभवात्-शत्रुकर्तृकात् पराभवात् तिरस्काराद् भवति। तत्र-रौद्रे रसे, भीष्मवृत्तिः-भीष्मा भयङ्करा, वृत्ति व्यवहारो यस्य तादृश, उग्र-क्रूरः, सामर्ष-अमर्षः क्रोध असहिष्णुता वा, तत्सहितः, नर, नायक भवेत्।

भावार्थ—जिसका स्थायी क्रोध हो वह रौद्र रस कहलाता है। शत्रु के किये हुए पराभव से क्रोध उत्पन्न होता है। रौद्र रस में नायक भयंकर वृत्ति वाला, उग्र और क्रोधी होता है ॥२९॥

अथ रौद्रस्यानुभावान् वर्णयति—

स्वांसाघातस्वशंसास्त्रोत्क्षेपभ्रुकुटयस्तथा।
अत्रारातिजनाक्षेपोद्वेलनं चोपवर्ण्यते ॥३०॥

अन्वयः—तथा अत्र स्वांसाघातस्वशंसास्त्रोत्क्षेपभ्रुकुटयः, अरातिजनाक्षेपोद्वेलनम् च उपवर्ण्यते।

पदार्थ—तथा अत्र-रौद्रे रसे, स्वांसाघातस्वशंसास्त्रोत्क्षेपभ्रुकुटयः-स्वस्य, अंसयो भुजशिरसो, आघातस्ताडनम्, स्वस्य-आत्मनः, शंसा-स्तुतिः-विकत्थनमिति यावत्, अस्त्रस्य-आयुधस्य, उत्क्षेप उत्तोलनम्, भ्रुकुटिः-भ्रुवो कौटिल्यम्, किं च अरातिजनाक्षेपोद्वेलनम्-अरातिजनानां शत्रूणाम्, आक्षेप-निन्दा, उद्वेलनम्-मर्यादातिक्रमणम् उच्छृङ्खलतेति यावत्, वर्ण्यते।

भावार्थ—इसी तरह इस रौद्र रस में अपने कन्धों को ताडन करना, अपनी बड़ाई करना, अस्त्र उठाना, त्यौरी चढाना, शत्रु की निन्दा करना और उच्छृङ्खलता का वर्णन किया जाता है। ये सब रौद्र रस के अनुभाव हैं ॥३०॥

बीभत्सं लक्षयति—

बीभत्सः स्याज्जुगुप्सातः सोऽहृद्यश्रवणेक्षणात् ।
निष्ठीवनास्यभङ्गादि स्यादत्र महतां न च ॥३१॥

अन्वयः—जुगुप्सातः बीभत्सः स्यात्, सः अहृद्यश्रवणेक्षणात् (भवेत्), अत्र निष्ठीवनास्यभङ्गादि स्यात्, च महतां (निष्ठीवनास्यभङ्गादि) न (वर्ण्यते)।

पदार्थ—जुगुप्सात घृणात, बीभत्स–बीभत्सरस, स्यात्, बीभत्सरस जुगुप्सास्थायिभावको भवतीत्यर्थः। स–बीभत्स, अहृद्यश्रवणेक्षणात्–अहृद्यस्य अमनोरमस्य घृणोत्पादकस्य, वस्तुन, श्रवणात्, ईक्षणात्–दर्शनाद् वा, भवेत्, अहृद्य वस्तु बीभत्सस्यालम्बनमित्यर्थ। अत्र–बीभत्से, निष्ठीवनास्यभङ्गादि–निष्ठीवनम्–थूत्करणम्, आस्यभङ्ग–मुखविकार, आदिर्यस्य तत्, स्यात्, च–किन्तु, इद निष्ठीवनादि, महताम्–उत्तमप्रकृतीनाम्, न वर्ण्यते।

भावार्थ—जुगुप्सा से बीभत्सरस होता है। अहृद्य (सड़े गले घृणोत्पादक) पदार्थ के देखने सुनने से जुगुप्सा उत्पन्न होती है। थूकना, मुख का विकृत हो जाना आदि इसमें (अनुभाव) होते हैं। परन्तु उत्तम प्रकृतियों में थूकना आदि का वर्णन नहीं किया जाता ॥३१॥

शान्तमाह—

सम्यग्ज्ञानसमुत्थानः शान्तो निःस्पृहनायकः ।
रागद्वेषपरित्यागात् सम्यग्ज्ञानस्य चोद्भवः ॥३२॥

अन्वयः—सम्यग्ज्ञानसमुत्थानः निःस्पृहनायकः शान्तः (उच्यते), च रागद्वेषपरित्यागात् सम्यग्ज्ञानस्य उद्भवः स्यात्।

पदार्थ—सम्यग्ज्ञानसमुत्थान—सम्यग्ज्ञानात्–अगनो मिथ्याज्ञ

प्रतिपत्ति, परमात्मानुभवो वा सम्यग्ज्ञानम्, तस्मात्, उत्थानम्—उत्पत्ति, यस्य तादृश, निःस्पृह—पुत्रलोकवित्तैषणाशून्य, नायको यस्य तथाभूतो रस, शान्त—शान्ताख्य, उच्यते । च—किंच, रागद्वेषपरित्यागात्—रागद्वेषयो—इष्टवस्तुनि प्रीती राग, अनिष्टवस्तुनि वैरम् द्वेष, तयोस्त्यागात्, सम्यग्ज्ञानस्य पुरस्तात् प्रतिपादितस्य, उद्भव—उत्पत्ति, भवति ।

भावार्थ—जिसकी उत्पत्ति सम्यग् ज्ञान से हो और जिस का नायक निःस्पृह हो, उसे शान्त रस कहते हैं। रागद्वेष के त्याग से सम्यग् ज्ञान की उत्पत्ति होती है ॥३२॥

अथाशिषा ग्रन्थमुपसंहरति—

**दोषैरुज्झितमाश्रितं गुणगणैश्चेतश्चमत्कारिणं**
**नानालङ्कृतिभिः परीतमभितो रीत्या स्फुरन्त्या सताम् ।**
**तैस्तैस्तन्मयतां गतं नवरसैराकल्पकालं कवि-**
**स्रष्टारो घटयन्तु काव्यपुरुषं सारस्वताध्यायिनः ॥३३॥**

अन्वय.—सारस्वताध्यायिन. कविस्रष्टारः दोषैः उज्झितं गुणगणैः आश्रितं नानालङ्कृतिभिः चेतश्चमत्कारिणम् अभितः स्फुरन्त्या सतां रीत्या परीतम् तैः तैः नवरसैः तन्मयतां गतम् काव्यपुरुषम् आकल्पकालं घटयन्तु ।

पदार्थ—सारस्वताध्यायिन—सरस्वत्या इद सारस्वतम्—वाङ्मयम्, तस्येदमिति शैषिकोऽण्, तस्य अध्येतार—पठितार, अथवा सरस्वती—वाङ्मयाधिष्ठात्री, तत्सम्बन्धितेजस अधियन्ति स्मरन्ति इति सारस्वताध्यायिन सरस्वतीसमुपासका इति यावत् । अध्येतार इति—इक्स्मरणे इत्यस्मात् कर्तरि तृच् । कविस्रष्टार—कवय एव स्रष्टार—कविप्रजापतय, दोषै—श्रुतिकटुत्वादिभि, उज्झितम्—त्यक्तम् रहितम्, गुणगणै—गुणानां माधुर्यादीनां दण्डिप्रोक्तानां श्लेषादीनां वा, गणै समूहै, आश्रितम्—युक्तम्, नानालङ्कृतिभि—अनुप्रासादिभि शाब्दालङ्कारै उपमादिभिरर्थालङ्कारैः, चेतश्चमत्कारिणम्—चेतांसि सहृदयाना हृदयानि चमत्करोति—आनन्दयतीति तथाभूतम्, अभित—सर्वत इत्यर्थ, स्फुरन्त्या—शोभमानया, सताम्—विदुषाम्

विद्वद्भिः प्रतिपादितया, रीत्या-वैदर्भ्यादिरीत्या, परीतम्-सगतं युक्तम्, तै तै -शृङ्गारादिभि , नवरसै -नवसंख्याकै रसै , तन्मयताम्-तद्रूपताम्, गतम्-प्राप्तम्, शृङ्गारादिरसमयमित्यर्थ । काव्यपुरुषम्-काव्यमेव पुरुषम्, आकल्पकालम्-कल्पकालद् आ कल्पपर्यन्तम्, घटयन्तु-रचयन्तु ! रूपकालङ्कार ।

भावार्थ—सरस्वती के उपासक कविरूप प्रजापति, कल्पपर्यन्त निर्दोष, सगुण, सालङ्कार, सहृदयों के हृदयों को आनन्दित करने वाले, वैदर्भी आदि रीति से युक्त, शृङ्गारादि नव रसमय काव्य पुरुष की सृष्टि करें ॥३३॥

इति वाग्भटालङ्कारव्याख्यायां बालबोधिन्यां
पञ्चमः परिच्छेदः ।



# प्रश्नोत्तरावली

१ प्रश्न—काव्य का लक्षण तथा उसकी सामग्री का स्वरूप लिखो ?

उत्तर—देखो पृष्ठ २, ३, ४, ५।

२ प्र०—बन्धसौन्दर्यहेतु कौन २ हैं ?

उ०—देखो पृष्ठ ६।

३ प्र०—अर्थस्फूर्ति के कारण लिखो ?

उ०—देखो पृष्ठ १०।

४ प्र०—किस स्थान पर ब, व का तथा ड, ल का भेद नहीं माना गया ? उदाहरण से स्पष्ट करो ?

उ०—देखो पृष्ठ १४।

५ प्र०—कितनी भाषा काव्य का अङ्ग होती है ?

उ०—देखो पृष्ठ २१।

६ प्र०—दोष का सामान्य लक्षण क्या है ? और वह कितने प्रकार के हैं ? श्रुतिकटु, अप्रसिद्ध, नेयार्थ—इनका लक्षण लिखकर उदाहरण से स्पष्ट करो ?

उ०—देखो पृष्ठ २३—२७ तक।

७ प्र०—वाक्यदोषों का स्वरूप लक्षण उदाहरण द्वारा स्पष्ट करो ?

उ०—देखो पृष्ठ ३०—३५।

८ प्र०—गुण कितने प्रकार के होते हैं ? तथा गुण का लक्षण क्या है ?

गन्धेभविभ्राजितधाम लक्ष्मीलीलाम्बुजच्छत्रमपास्य राज्यम्।
क्रीडागिरौ रैवतके तपांसि श्रीनेमिनाथोऽत्र चिरञ्चकार॥

यहां कौन गुण है ?

उ०—देखो पृष्ठ ३६—४०।

९ प्र०—समता गुण का लक्षण उदाहरण देकर स्पष्ट करो ?

उ०—देखो पृष्ठ ४१।

१० प्र०—श्लेष गुण तथा ओजो गुण का परस्पर भेद क्या है ?

उ०—देखो पृष्ठ ४५।

११ प्र०—ग्रन्थकार ने गुणों का उपसंहार किस भाव को लेकर किया है ?

विद्वद्भि प्रतिपादितया, रीत्या—वैदर्भ्यादिरीत्या, परीतम्-समतं युक्तम् तै: तै:—शृङ्गारादिभि, नवरसै—नवसङ्ख्याकै रसै, तन्मयताम् तद्रूपताम् गतम्-प्राप्तम्, शृङ्गारादिरसमयमित्यर्थ । काव्यपुरुषम्-काव्यमेव पुरुषम् आकल्पकालम्-कल्पकालाद् आ कल्पपर्यन्तम्, घटयन्तु-रचयन्तु रूपकालङ्कार: ।

भावार्थ—सरस्वती के उपासक कविरूप प्रजापति, कल्पपर्यन्त निर्दोष सगुण, सालङ्कार, सहृदयों के हृदयों को आनन्दित करने वाले, वैदर्भी आदि रीति से युक्त, शृङ्गारादि नव रसमय काव्य पुरुष की सृष्टि करें ॥३३॥

इति वाग्भटालङ्कारव्याख्यायां बालबोधिन्यां
पञ्चमः परिच्छेदः ।



